Samskrita Pratibha, Half-yearly Journal

Editor: Dr. V. Raghavan

*Annual Subscription*: Rs. 6, 14 *s.* or $ 2 (inclusive of postage)

Single copy: Rs. 3 (inclusive of postage)

Send your literary contributions to the Editor

Send your subscriptions and advertisements to the Secretary, Sahitya Akademi, Rabindra Bhavan, 35, Ferozeshah Road, New Delhi-110 001

Mechanical Data
Size: Demy Octavo (8½"×5½")
Print Area: 7"×4"
Line Measure: 24-ems

Edited and published by Dr. V. Raghavan for Sahitya Akademi (35, Feroze Shah Road, New Delhi), at 7, Sri Krishnapuram Street, Royapettah, Madras-14; and printed at the M.L.J. Press Private Ltd., Madras-4



संस्कृतप्रतिभा द्वादश उन्मेषः, द्वितीयो विलासः

१९७९

साहित्य-अकादमी, नवदेहली

## विषयानुक्रमणिका

अनुवादाः

(१७) संस्कृते वैज्ञानिकं वाङ्मयम् (सं. डा० एस्. वेङ्कटसुब्रह्मण्यः) (१८) सोढलनिघण्टुः सोढलविरचितः (सं. डा० प्रियव्रत शर्मा) (१९) विष्णु-धर्मोत्तरस्थं चित्रसूत्रम् (डा० सि. शिवराममूर्तिः) (२०) मीमांसाशाबरभाष्यम् (सं. युधिष्ठिर मीमांसकः) (२१) कल्हणः (सोमनाथ धार्) (२२) भारतीयकाव्यसाहित्यम् (आङ्ग्लग्रन्थः) (तृतीयो भागः) (डा० ए. के. वार्डर्) (२३) १९२७-१९५८ कालिदास-प्रवचनानां वाल्मीकि-प्रवचनानां सूच्यौ (संस्कृतसेवासमितिः) (२४) प्रवचनचिन्तामणिः, प्रवचनपारिजातश्च (सत्यनारायण शर्मा) (२५) मुरारि-नाम्ना उदाहृताः श्लोकाः (आङ्ग्लग्रन्थः) (डा० लुड्विक् स्टेर्णबाक्) (२६) विद्याधरग्रन्थावली (राजस्थान साहित्य अकादमी) (२७) काश्मीर-संस्कृतिप्रदर्शनानि (आङ्ग्लग्रन्थः) (श्रीपरमानन्द-विमर्शसंस्था) (२८) आम्बर-जयपुर-राजैर्दत्तः साहित्यकदायः (आङ्ग्लग्रन्थः (सं. गोपालनारायण बहूरा) (२९) श्रीमच्छङ्करकिङ्करब्रह्मानन्दकर्मन्दि-नरकण्ठीरवीयम् (नरकण्ठीरवशास्त्री) (३०) कुलशेखरसूरि-सूक्तिसम्पत् (इरङ्गण्टि रङ्गाचार्यः) (३१) श्रीनिवासशतकम् (विट्ठलदेवुनि सुन्दरशर्मा).

## सम्पादकीयम्—

### डा० वे. राघवः (आगस्ट् १९०८ - एप्रिल् १९७९)

महती दुरवस्था अस्याः संस्कृतप्रतिभायाः यदस्याः सम्पादको महोदयः डा० वे. राघवः हतविधिना अकस्मात् पञ्चतां नीतः। द्वादशोन्मेषपर्यन्तं तत्करपरिलालनसुखमनुभूता सात्र द्वितीयोल्लासे तद्रचितं सम्पादकीयरचनां विनैव बहिरागच्छति।

गते चैत्रमासे शुक्लपक्षनवम्यां गुरुवासरे (५-४-१९७९) मद्रपुरी-संस्कृतसमित्या प्रचालिते वाल्मीकि-महोत्सवे स्वेष्टदेवस्य श्रीरामस्य सौशील्य-मधिकृत्य सम्यक् सरसं च विमृश्य गृहं प्राप्तः श्री राघवमहोदयः, तन्निशायामेव हृद्व्यथया दिवं गतः। संस्कृतस्य भारतीयसंस्कृतेश्च महानुपष्टम्भो निपतितः। तेन कृता बहुमुखी अनर्घा च सेवा संस्कृतं संस्कृतिर्वा न कदापि विस्मरेत्।

श्रीराघवमहोदयः (२२-४-१९०८) दिनाङ्के तमिल्नाडुप्रदेशान्तर्गत-तञ्जावूर्मण्डलस्थ-तिरुवारूर्पत्तने तपःपूतान्ववाये जनुरग्रहीत्। साम्प्रदायिक्या सरण्या काव्यान्यभ्यस्य शास्त्रेष्वधि लब्धप्रवेशः सन् विद्वद्वरेण-महामहो-पाध्याय-कुप्पुस्वामिशास्त्रिणां सकाशाद् शास्त्रपद्धत्यां गवेषणसरण्यां च प्राप्तपरिचयः, श्रीभोजराजविरचितं प्रौढं शृङ्गारप्रकाशं नाम साहित्यशास्त्र-ग्रन्थमधिकृत्य सर्वंकषं महाप्रबन्धं निर्माय मद्रपुरी-विश्वविद्यालयाद् 'डाक्टर्' बिरुदमुपलब्धवान्। तदनन्तरं मद्रपुरीविश्वविद्यालये संस्कृतविभागे १९३८-तमे वर्षे संस्कृतग्रन्थसूचीपरिष्करणार्थं नियुक्तः १९५६ वर्षादारभ्य १९६८ पर्यन्तं संस्कृतविभागाध्यक्षपदवीं व्यभूषयत्। ततो वर्षद्वयं 'जवहरलाल नेहरूपण्डित'पदम् (Jawaharlal Fellowship) अप्यलंचकार।

नैसर्गिकी प्रतिभा, सूक्ष्मा बुद्धिः श्रुतधरा मेधाशक्तिरनितरसाधारणः प्रयत्नशीलः सर्वथा संस्कृतोद्धरणे अभिनिवेशश्च राघवमहोदयस्य ग्रन्थनिर्माणे भाषापरिपोषणे च साहाय्यमाचरन्तः सन्ततसहवर्तिनो व्यराजन्त।

केन्द्रसर्वकारेणायोजितायाः 'संस्कृतायोजन-समित्याः' (Sanskrit Commission) सभ्यो भूत्वा संस्कृतपरिपोषणे सजीवं मार्गदर्शनं कुर्वन् राघवमहोदयः संस्कृतप्रणयिनां नित्यस्मरणविषयं गतः । संस्कृतायोगनिवेदनानुसारं स्थापितायाः केन्द्रसंस्कृतसमित्या सजीवाङ्गीभूय यत्कृतमनेनेति सुविदितं संस्कृतप्रणयिनां पण्डितानां च । स्वगुरूणां स्मारकतया स्थापितस्य कुप्पुस्वामिशास्त्रि-गवेषणस्थापनस्य कार्यदर्शी भूत्वा सुनिपुणं गुरुचरणानां माहात्म्यं प्राकाशयत् ।

अनेकानि बिरुदानि सम्मानानि च सरितो वार्धिमिवैनं दिग्भ्यश्चाभिजग्मुः । मुत्तुस्वामिदीक्षितचरितनाम्नो महाकाव्यस्य निर्माणे प्रदर्शितां कविनैपुणीं पुरस्कृत्य श्रीकाञ्चीकामकोटिपीठाधिपतय एनं 'कविकोकिल'-बिरुदेनालंचक्रुः । मुम्बापुरी एष्याटिक् सोसैटिद्वारा 'काणे सौवर्णपदकं' स लब्धवान् । भारतशासकाध्यक्षैः 'पद्मभूषणाख्यं' बिरुदं चास्मै वितीर्णम् । संस्कृतवाङ्मयसम्बन्धिनः प्राच्याः पाश्चात्याश्च बहवः सङ्घास्तं सभ्यं प्राप्य आत्मनः कृतार्थानमन्यन्त ।

साहित्य-अकादमी, सङ्गीतनाटक-अकाडमी, ललित-कला-अकाडमी इति तिसृणामपि समितीनामङ्गभूतोऽयं भारतीयसंस्कृतेः परिपोषणार्थं नितरां दत्तश्रद्ध आसीत् । विशिष्य साहित्य-अकादमी-संस्कृतसमितिद्वारा तेन कृता विविधा संस्कृतसमृद्धिसेवात्र स्मरणीया । संस्कृतप्रतिभामिमां द्वादशसम्पुटपर्यन्तं सम्यगयं सम्पादितवानिति प्रतिभावाचकानामनुक्तिसिद्धमेव । 'भारतीय-साहित्य'नामके वार्षिकपुस्तके संस्कृतसाहित्यस्य स्थितिमधिकृत्य विमर्शोऽनेन कृतः । तेन सङ्कलितं सुभाषितसङ्ग्रहस्य द्वितीयं भागं नचिराद् अकादमी प्रकाशं नेष्यति । 'भोजस्य शृङ्गारप्रकाश'मधिकृत्य तेन रचितं प्रबन्धं पुरस्कृत्य अकादमी-पारितोषिकं तस्मै वितीर्णम् । परिषदः सदस्यमहत्तरत्वं (Fellowship) नाम सम्मानं तस्मै समर्पयितुं निर्णयः कृतः ; तत्स्वीकरणात् प्रागेव स कीर्तिशेषोऽभवदिति महान् विषादः समितेः ।

## ॥ गुरुनवकम् ॥

शारदाराघवौ वन्दे 'प्रियानन्दु'-समेधितौ ।
मम 'पर्याय'पितरौ 'दासचारु'-समन्वितौ ॥ १ ॥

असंशयं 'कोकिलो' यः 'कमलापुर'-भूषणः ।
'पद्मभूषण'विख्यातो भासते गुरुपुङ्गवः ॥ २ ॥

यदि वा काव्यपद्धत्यां कर्कशे विषयान्तरे ।
को न याति गुरुं शुद्ध्यै ससन्देहोऽपयाति कः ॥ ३ ॥

सर्वाङ्गीणं तावकमनितरसाधारणं हि वैदुष्यम् ।
कर्मणि कुशलतया खलु हाटकमिव गन्धसम्पन्नम् ॥ ४ ॥

ललितकलालय 'पद्म'विभूषण
कविकुलतोषण रसिकजनाश्रय ।
प्रथितगवेषक सफलमहोद्यम
लसति सदा तव धवलयशो दिशि ॥ ५ ॥

देवभूयं गते तस्मिन् कर्मवीरे रघूत्तमे ।
लोकः शोकतमोमग्नो दिङ्मूढः प्रस्खलत्यहो ॥ ६ ॥

विदितं नः करालत्वं कालस्य निभृतस्थितिः ।
तथा विधावधीनत्वं किं तु मोहपरिग्रहः ॥ ७ ॥

---

* मद्रपुर्यां कुप्पुस्वामिशास्त्रिगवेषणसंस्थायाम् अञ्जलिसमर्पणार्थं १९-४-१९७९ दिने आरचिते सम्मलेने लखयित्र्या नवम्यां देवभूयं गतमनवमं गुरुमधिकृत्य पठितम् ।

गीताचार्योपदिष्टेन मार्गेण प्रचलन् भवान् ।
किं स्वर्लोकाय गतवान् तदाचार्यदिदृक्षया ॥ ८ ॥

भो राघवार्य तव गायति सिद्धकन्या-
सङ्घो गुणान् कुमुदबान्धववृष्टिभासः ।
सम्प्रत्यवेक्ष्य तु समागतमात्मलोक-
मानन्दबाष्पकलशैरभिषिञ्चति त्वाम् ॥ ९ ॥

- डा० स. सु. जानकी



कीर्त्तिशेषाः प्राचार्याः श्रीमन्तः

डा० वे. राघव-महोदयाः

१९०८-१९७९

संस्कृतप्रतिभायाः सम्पादकाः

# साहित्य-अकादम्याः शोकसंवादः

महाञ्छोक आपतितः यतः ५-४-१९७९ दिने श्रीराघवमहोदयः सहसा कीर्तिशेषतां गत इति । एते साहित्य-अकादम्याः पारितोषिकं (Award) सदस्यमहत्तरत्वं (Fellowship) नाम गौरवं च, तथा सङ्गीतनाटक-अकादम्याः सदस्यमहत्तरत्वं च लब्धवन्तः । संस्कृतस्य भारतीयसंस्कृतेश्च दुःसमयः सञ्जातोऽस्य तिरोधानेन ।

अखिलभूमण्डलप्रथिता एते शतशो ग्रन्थ-व्याख्यानादिकर्तारः, सदैव कुतूहलिनः, शिल्पादिषु रसिकाश्च । यदा श्रीराघवस्य ग्रन्थानां दिशि दृष्टिरस्मदीयाऽऽत्मानं विनिवेशयति तदा सा तत्कृतानां लेखानां रत्नाकरस्य परं पारं न प्राप्नोति ।

२२-८-१९०८ तमे वर्षे दिने तमिलनाडुप्रदेशे जनितस्सः मद्रपुरी-राजकीयकलाशालायामधीत्य सर्वोच्चोपाधिपरीक्षायां सबहुमानमुत्तीर्य, मद्रपुरी-विश्वविद्यालये १९३४-३५ तमे वर्षे 'डाक्टर्'-बिरुदं च समवाप । मद्रपुरीविश्व-विद्यालये ३३ वर्षाणि संस्कृतविभागमलंकृत्य तस्य विद्यालयस्य यादृशीं समुन्नतिं व्यधादिति सर्वेषां विदितमेव ।

संस्कृतसम्बन्धिनः भारतीयसंस्कृतिसम्बन्धिनश्च प्राच्यान् प्रतीच्यांश्च परश्शतं सङ्घान् एते अलङ्कृतवन्तः, तैः सङ्घैः विविधानि बिरुदानि पारितोषिकाणि च समवापिषत । विद्वत्तल्लजः कविः वाग्मी, सङ्गीतशास्त्र-पारङ्गतश्च स आसीत् । कुत्र वाऽस्य अभिनिवेशो नासीदिति वक्तुं न शक्यते । साहित्य-अकादेम्याः स्थापनादारभ्य प्रवृत्तोऽस्य सम्बन्धः आ-अन्तिमं निबिडोऽविरतश्चाभवत् । अनया समित्या प्रकटिते भारतीयसाहित्यनामके (Indian Literature) चतुर्दशभाषादिविषयके पुस्तकेऽनुस्यूततया प्रतिवार्षिक-संस्कृतसाहित्यस्य विमर्शमकरोत् । अकादमीद्वारा प्रकाशितानां कालिदास-

काव्यनाटकानां सुभाषितकोशानां च सम्पादने अस्य साहाय्यं मूलभूतमनर्घं च । स्वान्तिमकालेऽपि एष महाशयः अकादेम्या प्रचालिते विश्वरामायण-समालोचने पठितानां गवेषणलेखानां मुद्रणे तद्विषयकप्रूफपठने च बद्धादरोऽभवत् । कवितामार्गकुतूहली स्वयं कीदृश्या रीत्या संस्कृत-प्रतिभामिमां सम्पादितवानिति प्रतिभावाचकेभ्यो न वक्तव्यम् । एषा परिषद् तस्मै २५-२-७९ दिने सदस्यमहत्तरत्वं नाम गौरवं समर्पयत्, अनेन गौरवेण सः प्रमोदभरितोऽभवत् ।

संस्कृतोन्नतिविधाने श्रीराघवस्य श्रद्धा दक्षत्वं कार्यपरिचालना च अतुलनीया इति निश्चप्रचं वक्तुं शक्यते । तस्य अन्तर्धानेन निखिलविद्या-प्रपञ्चस्य निर्दारुणः शोकः जनितः ॥

## मध्याह्नः

वे. राघवः

निष्पन्दपत्रास्तरवः, कुतोऽपि
लीनं खगैः, द्वित्रजना च रथ्या ।
अहो विशिष्यात्र सुखाय वृक्ष-
च्छायातले शाद्वलशीतिमाऽयम् ॥ १ ॥

आभोगि दूरं परितोऽपि भाति
सूर्यातपेनातिसमुज्ज्वलश्रि ।
एकान्तमद्वैतमिहार्त्तदृष्टि
जीवातु हारित्यमहाविभूत्याः ॥ २ ॥

चार्वञ्चिनारोहविषाणशीर्ष-
मात्रं समुद्धृत्य पुरस्तडाके ।
स्वपन्ति वामी महिषा मुदान्धाः
सर्वस्य निर्वाणमिहास्ति किञ्चित् ॥ ३ ॥

मन्दानिलो दक्षिण एष गात्रं
सुमित्रवाचां दयिताकराणाम् ।
अप्यश्रुतेन स्पृशति स्वादिम्ना
कोऽप्यद्भुताश्वासनकार्मणो मे ॥ ४ ॥

स्वेदाम्बुमुक्ताङ्कितवक्त्रमस्मिन्
मृशत्यहो चेतसि निर्वृतिर्नः ।
प्रत्येकघर्माम्बुकणं तुषार-
नाडीव भात्यङ्ग समर्प्यमाणा ॥ ५ ॥

सारल्यमद्धा जनमानसस्य
सुखं लवं चेन् परमं पदं तत् ।
उत्स्पन्दते कण्टकितं हृदन्तः
विस्मृत्य दुःखान्यखिलान्यपीह ॥ ६ ॥

# उच्छ्वसितानि

वे. राघवः

१

अस्त्यत्रैव वनीपथो बहुफलः, पन्था नदीं प्रत्ययं,
यास्येतेन पथा - न न, प्रथमतः स्नानं विधास्ये विधिम् ।
मार्गं किञ्चिदिमं व्रजामि - सहसा कृष्टोऽस्मि मार्गान्तरैः
एवं वा बहुभावुकोऽहम् - अथवा शत्रुर्विशालं मनः ॥

२

जातीयं वकुलोऽयमत्र कमलं मल्लीह मालत्यसौ
सर्वेष्वेव सुमेषु रज्यति मनो, वीक्षेऽखिलान्युत्सुकम् ।
जातीमेव समुच्चिनोमि, न न, मे मालत्यसौ रोचते
किं कुर्याम् ? अचिरेह मे स्थितिः - अहो हूतिर्वनीपादसौ ।

३

संसारार्णवबुद्बुदेष्ववसम् एतावत्स्थिरप्रज्ञया
हर्षेणेव विवर्तयन्त्रघटनारूढोऽत्र मूढोऽभ्रमम् ।
मत्स्यग्राहदिनं समागतम्, असौ जालेन कालः पुरः
मायाधीवर! मूढमत्स्यमधुना स्वामिन्नमुं स्वीकुरु ॥

४

मद्वातायनतो बहिर्जगदिदं जाग्रज्जगच्चक्षुषा
वीक्षे बोधितम्, अद्य वेद्मि च मया बोद्धव्यमित्यप्यहम् ।
नीशारं विदुधूषुरेव सह च स्वापेन यद्यप्यहं
शय्यायां परिवर्त्य देहमसकृत्संमीलयाम्यक्षिणी ॥

५

अग्रे पर्वतमस्तके रसमयं किंचित्फलं राजती-
त्युक्तं यद् बहुधा ततः कथमहो श्रद्धा भवेन्मादृशाम् ?
तत्प्राप्तिर्न सुखात ; वयं च नितरां तन्द्रालवः ; का गतिः ?
किंचित् तद्रसनं भवेद् यदि - कथं तच्चापि लभ्येत नः ॥

६

भो रत्नाकर! पाथसामपि निधे! केयं त्वयि क्षारता?
कामामात्य! कलानिधेऽमृतघृणे! लक्ष्म त्वयीदं कुतः?
अत्याशा बत नो न साहयति वामेकं च दोषम; कुतो
निर्दोषा न हि केचनात्र विषया इत्येतया नेक्ष्यते ॥

७

सौधाग्रतः परित ऐक्षि - पुरस्तु पन्थाः
ह्रस्वो महागहननष्टनिजोभयान्तः ।
न ज्ञायते कथमयं कुत आविरेति
नो वा कथं कुत इतो वहमान आस्ते ॥

८

गन्तव्यबुद्धिमयि मुञ्च, विचेष्टितेन
नाप्यं किमप्यज इहास्ति तवांस[1] एव ।
नेत्रे निमीलय, गुहागहनं भजस्व,
ध्वान्ते तदेतदुपचिन्वमृतं स्वमेव ॥

---

1. अजपालकः कोऽपि निज - अजगणनाव्यग्रः एकं स्वस्कन्ध एवोढं विस्मृत्य नष्ट एक इति तं वृथा बहिर्गवेषयतीत्यस्ति आभाणकः ।

# पैशुन्यम्

वे. राघवः

आलोक्य त्वां
हर्षोन्मत्ताः ।
नृत्यन्त्येते
वार्धेर्भङ्गाः ॥ १ ॥

त्वल्लक्ष्मीभि-
र्भान्त्येते ।
काष्ठाप्रान्ता
धौतामृष्टाः ॥ २ ॥

त्वज्ज्योत्स्नेयं
विश्वं व्याप्य ।
क्षौमं वासो
भूम्या धत्ते ॥ ३ ॥

त्वत्कौमुद्याः
पीयूषेण ।
क्षुब्धस्वान्ता
मत्ता लोकाः ॥ ४ ॥

त्वय्युद्गच्छ-
त्युत्थः कामः ।
स्पन्दन्ते नः
चेतांस्युत्कम् ॥ ५ ॥

एह्युद्गच्छ
श्यामानाथ ।
पीयूषांशो
ज्योत्स्नोल्लासिन् ॥ ६ ॥

त्वत्क्षीरश्री-
पूरे मग्नान् ।
कुर्वन् लोका-
नुज्जृम्भस्व ॥ ७ ॥

हन्तेदानीं
निर्व्याजश्रीः ।
ह्लादैकात्मा
राजस्यूर्ध्वम् ॥ ८ ॥

हंहो क्रूरं
किं जानासि?
धिक् धिक् धातुः
पैशुन्यं भोः ॥ ९ ॥

सद्योऽद्य त्वां
लुप्तश्रीकम् ।
हन्त द्रष्टुं
नो नो शक्यम् ॥ १० ॥

भो मुग्धेन्दो
पृष्ठे पश्य ।
पश्योद्दंष्ट्रं
राहुं दैत्यम् ॥ ११ ॥

कीटः पुष्पं
दम्भः शीलम् ।
गर्वो विद्या-
मत्तुं सज्जाः ॥ १२ ॥

विद्वच्चित्तं
दारिद्र्याग्निः ।
दग्धुं दीक्षां
नित्यं धत्ते ॥ १३ ॥

किं वा लोके
पूर्णश्रीकम् ?
धिक् धिक् धातुः
पैशुन्यं भोः ॥ १४ ॥

## शृङ्गारभृङ्गारिका

बहादुरचन्द्रश्छाबोत्कटः

दीपे पतङ्गः कमले च भृङ्गश्चन्द्रे चकोरश्च मुदं तनोति ।
प्रीणाति रूपेण तथैव नूनं युवा युवत्या युवतिश्च यूनः ॥ १ ॥

नारीणां पटुतां स्वयं स भगवान् ब्रह्मापि जानाति न
क्षुद्राणां तु तपस्विनां तनुभृतामस्मादृशां का कथा ।
ताभ्यः सोऽप्युपसद्य वेदविदुरो विद्या अधीयाद्द्रुतः
स्वाङ्गेभ्यो जनयन्त्यनङ्गमिह याः पुंसां मनःसु क्षणात् ॥ २ ॥

देवे वर्षति पीयूषं सुधासिन्धौ स्फुरत्यपि ।
नैकमप्यास्वदे बिन्दुं मादृशः कोऽस्ति भाग्यवान् ॥ ३ ॥

देवेनातिकृपालुना मम कृते पीयूषवर्षा कृता
वारंवारमहं च हन्त सविधे नीतः सुधोदन्वतः ।
एतावत्यपि नाहमेकमपि यद्बिन्दुं कदाप्यास्वदे
दोषः सोऽस्ति ममैव मूढमनसो धिङ् मां जडं कातरम् ॥ ४ ॥

दृष्ट्वा कुक्कुटकेकिकोकिलगताश्चूडाः शिखण्डाः शिखाः
सौन्दर्यं प्रकृतेः परं प्रियमिति प्रत्येमि निश्चप्रचम् ।
मर्यादामतिलङ्घ्य दर्शितवती किन्तु स्वकीयां कलां
रूपं वामदृशां कृतं यदनया प्राणान्तकं मादृशाम् ॥ ५ ॥

दृक्पातेन यदीदृशां पृथुदृशामानन्द एतादृशः
सद्यो विद्युदिवात्मबुद्धिमनसामुद्दीपकः प्राप्यते ।
ब्रह्मानन्दमवाप्तुमाप्तपुरुषैः सूक्ष्मेक्षणैः कल्पितं
कायक्लेशकरान् शमादिनियमान् कोऽत्रानुतिष्ठेत्तदा ॥ ६ ॥

---

* मार्च्-मासे मद्रपुरी-संस्कृतसेवासमिति-सुवर्णोत्सवे कविगोष्ठ्यां पठितमिदम् ।

दूरस्थोऽपि रवेर्मरीचिनिवहः पुष्णात्यहो पद्मिनीं
तद्वत् कैरविणीं करोति विकचामुद्द्योत इन्दोरपि ।
इत्थं चेदचराश्चरन्ति विवशं का स्याच्चराणां दशा
प्रीते रीतिरतीव विस्मयकरी विश्वं यया भ्राम्यते ॥ ७ ॥

केयं मधुरा मदिरा रूपवतीरूपरूपा वै ।
दृष्ट्वैव यां पुमांसो भृशमुन्मादं प्रपद्यन्ते ॥ ८ ॥

गीतायामुदितं वचो भगवता दृष्टान्तयन्नुत्तमं
मिथ्याचारवदाचरं चिरमहो आत्मन्यनीशो भृशम् ।
यत्नं नैव पुनस्त्यजामि यदहं संस्तम्भनायात्मन-
स्तेनाशास्ति मनाक् कदाचिदपि मां सिद्धिः समेयादिति ॥ ९ ॥

# अभारतीकृतं भारतम्

डा० अर्क सोमयाजी

अस्माकं भरतक्ष्मा वसुमतीसीमन्तमुक्तामणिः
वेदान् वेदशिरांसि शास्त्रनिवहं वैयासिकं वाङ्मयम् ।
ब्रह्मर्षींश्च वसिष्ठगौतममुखान् या प्रासविष्ट प्रजां
धर्मब्रह्मपरायणां हितमतिं चक्रे च या तद्बलात् ॥ १ ॥

या श्रीराममजीजनद् युगयुगाराध्यं परं दैवतं
या श्रीकृष्णमुखस्रुतां भगवतीं गीतां व्यतानीत् क्षितौ ।
या वाल्मीकिमुखेन्दुनिस्सृतसुधास्रोतोवहां भारतीं
सन्ध्यानानटदिन्दुशेखरजटाजूटाग्रनिष्यन्दिनीम् ॥ २ ॥

रङ्गत्तुङ्गतरङ्गितां भगवतीं गङ्गामिवाबीभवत्
काळीदासमुखप्रभूतकविताधाराधरा यत्र वा ।
चक्रुः काव्यरसप्लुतां च जनतामाबालगोपालकं
देशस्तादृगभारतीयति जनाश्चाभाग्यतां प्रापिताः ॥ ३ ॥

सौरेस्सम्प्रति दुर्दशा प्रचलति म्लेच्छीकृता यत्प्रजाः
यस्माद्दिव्यसरस्वतीं श्रुतिहितां धर्मप्रबोधात्मिकाम् ।
श्रीमद्भारतभागधेयपदवीं यन्नाद्रियन्ते जनाः
किंहेतुप्रभवा परिस्थितिरियं स्यादित्यनालोचिता ॥ ४ ॥

यावद्भारतभूगतैः प्रभुपदैरद्य त्रिभाषापरैः
यैर्विद्यालयपाठ्यभागनिवहाद् देवोऽपि दूरीकृतः ।
यद्युद्योगपदानि वाञ्छति जनः सर्वोऽपि तादृग् गिरं
पाश्चात्यामवशं पठेदिति कृता या दुर्व्यवस्था पुरा ॥ ५ ॥

---

* मार्च्मासे मद्रपुरी - संस्कृत-सेवा-समित्याः सुवर्णोत्सवे कविगोष्ठ्यां पठितमिदम् ।

पाश्चात्यैः प्रभुभिः समस्तजनतां हस्ते निधातुंतरां
साऽद्याऽपि प्रभुभिर्गतानुगतिकैरज्ञैः समाश्रीयते ।
तस्मात् सर्वजनः स्वकुक्षिभरणं कर्तुं व्यवस्यन्नहो
तामाङ्ग्लेयगिरं पठन्नगतिको हूणीकृतो वर्तते ॥ ६ ॥

यद्युद्योगपदानि संस्कृतगिरा लभ्यानि नैतादृशं
दौर्गत्यं भविताऽत्र सर्वमपि हि द्रव्ये प्रतिष्ठां भजेत् ।
देवोऽस्तीति न पाठितो शिशुगणः, तस्मै गुरौ गौरवं
सम्पद्येत कथं? ततो युवजने पुण्यं न पापं न च ॥ ७ ॥

देशे सम्प्रति बालकेषु सिकतातैलायते संस्कृतिः
नास्तिक्यं निबिडीकृतं बत कुहूरात्रौ तमोवृष्टिवत् ।
देशारिष्टमुपस्थितं युवजनाः कुर्वन्ति कोलाहला-
न्याचार्यश्च बिभेति शासितुमिदं भूतं स्वविद्यार्थिनम् ॥ ८ ॥

भाषाः प्रान्तगताः पुरा कविवरैः पोपुष्यमाणाश्चिरं
ज्ञानायैव बभूवुरद्य जनतावैरार्थमेवाश्रिताः ।
अद्यत्वे गळहस्तितेव जननी गीर्वाणगीर्देवता
कोणे ताम्यति नश्यतीह जरती मातेव पाठान्तरैः ॥ ९ ॥

एवं नैजगृहात् प्रवासमयिता पाश्चात्यदेशे स्थितिं
लब्ध्वा तत्र जनेषु पूज्यपदवीं प्राप्तां च तां निस्त्रपाः ।
स्वर्गस्थां कथयन्ति हन्त महतीमेतां विनष्टां न ते
जानन्त्यद्यतनीयभारतजनाः; किं भारतीया वयम् ॥ १० ॥

## वसन्तश्रीः

डा० बो. रा. शास्त्री

का त्वं भोः सुषमे! मनो हरसि मे लास्यैरिदानीं नवै-
रद्य स्वान्तमिदं मुदा सरभसं धावत्यहो कुत्रचित् ।
वासन्ती खलु चित्रवेषकलिता साक्षात्कृता सुस्मिता
नूनं भूमिमवातरन्मम कृते स्वर्गाद् वनं नन्दनम् ॥ १ ॥

कोटिश आदाय सुमा-
न्यवेक्षते हन्त भोगवल्लीयम्[1] ।
पदमप्येकं प्रचलितु-
मितो न शक्तो निषक्तदृष्टिरहम् ॥ २ ॥

द्वौ कोकिलावाम्रकषायकण्ठा-
वुन्मत्तभृङ्गावलिदत्ततानौ ।
वनं भृशं पञ्चमरागविद्धं
परस्परेर्ष्यारुचिरौ व्यधत्ताम् ॥ ३ ॥

कथं त्वकस्मात् तु लते! विलोलदृक्
प्रवेपसे खिन्नवपुः स्मिताङ्कुरा ।
अनेन यूना पवनेन सस्पृहं
विलोकितेवैवमधीरतां गता ॥ ४ ॥

नयसि जगदिदं त्वं सौरभोन्मादलोलं
चरसि भुवनजातं नव्यतेजोऽभिरामम् ।
ननु नत उपयाचे भो वसन्तानिल! त्वां
वह जनमिममार्तं त्वं त्वया साकमद्य ॥ ५ ॥

चैतन्यमद्वयमपास्तसमस्तभेदं
नानाविधं वितनुते रुचिरं विवर्तम् ।
स्वान्तावतंससि वसन्त! सदैव स त्व-
मेषोऽहमित्यभिमतं वच एव तत्त्वम् ॥ ६ ॥

---

1. Bougainvillaea

## निद्रे ! प्रिये !

डा० बो. रा. शास्त्री

निद्रे ! प्रिये ! सर्वभद्रे ! घनानन्दमुद्रे
मामितः कुत्रापि देवि ! नय सत्वरमिदानीम् ॥ १ ॥

स्पृशसि कथमपि तनुं - मीलयसि दर्शनं
किमिति कान्ते ! हससि ? - हरसि मम मानसम् ।
यामि देशान्तरम् - यामि देहान्तरं
यामि भावान्तरम् - यामि जन्मान्तरम् ॥ २ ॥

प्रकृतिं प्रपद्येऽद्य - विकृतिं निरस्यामि
दुःखानि सर्वाणि मामिदानीं जहति ।
अङ्ग ! शोकाकुलं नाद्रिये जगदिदं
विहगाः कुलायमिव निविशे स्वमालयम् ॥ ३ ॥

उदितप्रभे ! तरुणि ! सदयमित आयाहि
मन्दमन्दं प्रसर - गृहाणेष्व सरभसम् ।
परिरम्भस्वोद्धुरं - मा मुञ्च ! रमणि मां
सन्ततं स्वपिमि ते निश्चिन्तमङ्केषु ॥ ४ ॥

## सूक्तिरत्नावली

भीमराजु सत्यनारायणः

एकत्र सख्यमपरत्र विरोधमेत्य
मूढ परस्परविरुद्धफलाभिलाषी ।
दीर्घायुषं तनयमिच्छ'त वृद्धनारी
वैधव्यमप्यभिलषत्यहह स्नुषायाः ॥ १ ॥

नार्याः प्रसूतिसमये जनिता च बुद्धि'
श्रोतुः पुराणपठने च मतिः प्रसूता ।
बन्धोः श्मशानधरणादुदिता च चिन्ता
वैराग्यनिर्भरतया भुवि सुप्रसिद्धा' ॥ २ ॥

आकस्मिकीं समधिगम्य महाविभूति-
मल्पप्रभुर्भवति तद्विनियोगमूढ. ।
कश्चित् पुरा ह्यनधिरुढहयस्तुरङ्ग-
मारुह्य पुच्छदिशि दत्तमुखो न्यषीदत् ॥ ३ ॥

एकं विधातुमथ मूढजने प्रवृत्ते
साक्षात् तु सम्भवति तद्विपरीतमन्यत् ।
कर्तुं मृदा व्यवसिते गणनाथमूर्तिं
शाखामृगस्य वपुषाऽवततार रूपम् ॥ ४ ॥

लोके कृतस्य बहुलस्य परिश्रमस्य
प्राप्तं फलं समुचितं यतते मनुष्यः ।
द्वीपप्ररुढनवशाद्वलघासभुक्त्यै
को वा पशुस्तरति तीव्रनदीप्रवाहम् ॥ ५ ॥

पादूतले पदगते पतितं च लोष्टं
कर्णप्रविष्टसरघाऽक्षिणि धूलिलेश. ।
पादे च कण्टकलवो जनयन्त्यपार-
बाधां नरस्य कलहश्च कुटुम्बमध्ये ॥ ६ ॥

क्षिण्वन्ति ये परजनान् कटुभिर्वचोभिः
कालक्रमेण पुरुषा भुवि ते म्रियन्ते ।
तेषामरुन्तुदवचांसि तु शाश्वतानि
भूत्वा मनस्यविरतं जनयन्ति खेदम् ॥ ७ ॥

भग्ने च लोहमयवस्तुनि तीव्रघातात्
सन्धानमस्य कुरुते खलु लोहकारः ।
भग्ने मनस्यथ जनस्य कठोरवाक्यैः
सन्धानमस्य रचितुं च क ईश्वरः स्यात् ॥ ८ ॥

उद्यन् महीसुरवरैस्तरणिर्नमस्यः
तद्वत् पतन्नपि च तैः स पुनर्नमस्यः ।
जीवन् करी भवति रूप्यसहस्रमूल्यः
मृत्युं गतोऽपि लभते स तदेव मूल्यम् ॥ ९ ॥

आदौ विधाय सुकरं खलु कार्यमेव
पश्चाद् यतेत भुवि दुष्करकार्यसिद्ध्यै ।
आदौ विजित्य सदने निजबन्धुवर्गं
पश्चाज्जयाय सदसि प्रयतेत विज्ञः ॥ १० ॥

एकं कदापि रचितं खलु पापकार्यं
द्वारं करोति बहुपापपरम्पराणाम् ।
एकस्य नूनमनृतस्य निगूहनार्थ-
मावश्यकं भवति चानृतवाक्सहस्रम् ॥ ११ ॥

# अद्यतनी स्थितिः *

स्वामिनाथ आत्रेयः

अद्याहं द्विसहस्रवत्सरमितौ द्वाविंशदल्पीयसि
क्रैस्ताब्दे भुवनं समीक्षितुमना वीक्षापथे सचितान् ।
अद्यान् द्रागुपपादयेऽत्र सुहृदो नन्दन्तु निन्दन्तु वा
काले भाविनि भावुका स्मितमुखाः हृष्येयुरेतद् ध्रुवम् ॥ १ ॥

साहस्रे त्रितये तु भौतिकमहाविद्याभिवृद्ध्या जना
प्रायो यन्त्रमयं स्वकीयचरितं सवर्तयन्तो मिथः ।
अस्मन्मौग्ध्यमथार्जवं मृदुतमां वृत्तिं तथा साधुतां
संचिन्त्य प्रहसेयुः - अद्य हि वयं प्राचो यथा मन्महे ॥ २ ॥

तेभ्यो भाविजनेभ्य उत्सुकमना अस्मत्कथां प्रब्रुवे
नात्राद्यत्विकसज्जना उपचरन्त्वात्माभ्यसूयादृशम् ।
ये स्वात्मोपहसैकसाहसकृतः लोकं जयन्तीत्यतो
निश्चिन्ता विमृशन्तु ते वच इदं स्वात्मोपहासो यदि ॥ ३ ॥

नाहं भूविवरे निगूहितुमिदं ग्रथ्नाम्यवेद्यं परैः
मिथ्याशसनसत्यनिह्नवधिया वाऽऽत्मप्रशंसापरः ।
यद्वक्ष्यामि विदां भवेत्विपर्पाठपूर्णमेतदत्रोदितं
सत्यं सर्वमिति - प्ररोचनमिदं भाविप्रजानां कृते ॥ ४ ॥

स्वाचारेऽण्वपि नातियाति, सहते न ह्रासमद्यापि यः
संमार्ष्ट्याश्रितदुष्कृतानि तपसा श्रीकामकोटीश्वरः ।
वात्सल्येन यदाऽऽलपेदपशदान् - ते दुर्मदान्धा भृशं
सत्याचारपरांस्तुदन्ति - विनुमो विप्रब्रुवांस्तान् ह्रिया ॥ ५ ॥

---

* मार्चमासे - मद्रपुरी - संस्कृतसेवासमिति - सुवर्णोत्सवे कविगोष्ठ्यां पठितमिदम् ।

राज्ञां निर्वहणाय षष्ठ इति यो भागः करः स्वीकृत
तस्मादेव समस्तराज्यसुखमप्यापादितं पूर्वजैः ।
एकोनं शतमंशमद्य कर इत्यादाय राज्यस्य यत्
पर्याप्नोति न सेवकोदरकृतेऽप्येषा विचित्रा स्थितिः ॥ ६ ॥

विद्या नाम निरन्तराभ्यसनतः साध्या च - धार्या हृदी-
त्यासीत् - लौकिकवैदिकीषु कृतिषु प्रायुज्यत प्रागियम् ।
दर्वीस्पर्शनमात्रतः स्फुटति सा कल्लोलमालानिभा
यद्यावच्च यदिष्यते झटिति यन्त्रेभ्या[1] विना वैदुषीम् ॥ ७ ॥

एवं चाहारनिद्रातिभयमिथुनतामात्रकार्यप्रवाह
दर्वीस्पर्शेषु यन्त्रेषु भुजिकृतिविधौ सौकरीं कांक्षते हि ।
कर्मागारं प्रविश्य स्वापिति परवशस्त्वक्षगोष्ठ्या विनिद्रः
धर्म्यात् कार्यादपैति च्युतिभयमभिनीयास्तिकत्वाभिमानः ॥ ८ ॥

शृङ्गारं वक्तुकामो न खलु लघुकथाकारशैलीं नवीनाम्
अत्येतु शक्नुवानोऽप्यनुचितमिति यत्प्रोत्सहे विस्तरीतुम् ।
साजात्यं श्वापि सर्पो विजनतरुगुहा प्रेक्षते भोगहेतो.
यां कांचिद्यत्र वापि प्रसभमभिसरत्यद्यमानो[2] मनुष्यः ॥ ९ ॥

काव्ये स्त्रीणां हि लज्जाऽऽभरणमतिचमत्कारमङ्गोपगूहं
कुर्यादित्यादि सन्तत्युपचितिमनुसृत्योक्तम् - एतन्निरोधम् ।
अद्यत्वे कांक्षमाणा विरतिमसमये निस्त्रपा अल्पवस्त्राः
स्वल्पायुष्यल्पभूषा उपगतजरसः साधयन्ति प्रकामम् ॥ १० ॥

---

1. Computors
2. अद्यतनमात्मानं मन्ता इति अद्यमानी

स्वाराज्यात् पूर्वमासीद् अखिलजनरुजां कारणं दैन्यवृत्तिः
पाराधीन्यात् किलेति प्रकटमुपदिशन्ति स्म नेतृप्रकाण्डाः ।
अद्य स्वातन्त्र्यमेवाधिकमधिकतरं सन्नियन्तुं प्रवृत्ता
अस्माभिः स्थापितास्ते - स्वयमनियमितस्वार्थकृत्याः पदव्याम् ॥ ११ ॥

सन्त्वेते विषया विचारविरसा नैषां समीचीनने
श्रद्धा बुद्धिरथापि शक्तिरिह मे - व्यथो हि चिन्ता ततः ।
गैर्वाण्या अतिनिस्तुलं यश इह क्रूरेऽपि भाषागण-
स्पर्धालौ समये सुवर्णलहरीलेखां समीक्ष्य स्मये ॥ १२ ॥

नैराश्याकुलमानसैरिह सदा सर्वत्र निर्वेदिभिः
"गैर्वाणी बहुभिः पुरा व्यवहृता, नाद्ये"ति रोरुद्यते ।
नैवं पामरभाषिता; कविभिरास्थानास्थितैः पण्डितैः
काव्ये शास्त्रविचारभूमिषु सदा प्रायुज्यतात्यादरात् ॥ १३ ॥

शालायां विपणौ च पामरजनैः यद्यादृता भाषणे
भग्ना सन्धिषु कुण्ठिताऽप्यवसितौ भुग्ना च दीर्घान्तरे ।
एवं सा विकृता स्वरूपविगमात् न प्रत्यभिज्ञामियात्
तारुण्यं नियतं चिराय न वहेत्, श्लाघास्पदं किंन्विदम् ॥ १४ ॥

विद्वांसः कवयश्च सन्ति बहुशो वैदुष्यवैदग्ध्ययोः
श्रेष्ठाः श्रेष्ठतमाः पुरातनयशोभाग्भ्योऽपि नैवावराः ।
तेषां नव्यसुगन्धिसद्रसभराः धन्यः कृतीः सौहृदे-
नास्वाद्य प्रजहातु दुर्भरनिराशां मत्सरेणाहिताम् ॥ १५ ॥

धन्या 'संस्कृदकादमी' सुरगिरां या वाङ्मयी माधुरी
तस्याः संकलने यथायथरसप्रत्यायने रोचने ।
तत्तत्कालविनिर्णये कवयतामेतत्त्वसंपादने
संशोधान् विपुलान् विधाय सुचिरं जीवत्यमोघायुषी ॥ १६ ॥

तस्या नेतृपदं चिराय चरितार्थं स्वारसिक्येन यो-
ऽप्यध्यास्ते किल राघवार्यविबुधः तं श्रेयसाऽऽशास्महे ।
वैदग्ध्येन विशालविस्तृतसुसूक्ष्मेक्षाहृतेनात्मनः
छात्राणां विचिकित्सतां च विदुषां यो मार्गदर्शी सुहृत् ।। १७ ।।

अन्यत् किंचिदनुत्तमं प्रकृतमत्यन्तोपकारास्पदं
यत्श्रद्धाय च "संस्कृतप्रतिभया" नव्यैः समुन्मेषिताम् ।
नव्यां संस्कृतसाहितीमुपचिनोत्युद्बोधयत्यादरात्
तस्मादर्हति राघवो विबुधराडागामिकालाशिषः ।। १८ ।।

## "क्रीडास्थले क्रीड्यताम्"

बहादुरचन्द्रश्छापोल्कटः

प्रत्येकं दिवसो भवत्यभिनवः
प्रत्येकमेवोत्सवः
प्रातः प्रातरुदेति हन्त सविता
तिग्मांशुमाली दिवि ।

पृथ्वी सुन्दरसुन्दरैश्च विविधैः
पुष्पैः फलैः शोभते
रम्येऽस्मिन् परमात्मना सुविहिते
क्रीडास्थले क्रीड्यताम् ॥

# "त्रयो मुनयः"

(टाल्स्टाय् - कथा)

अनु० वे. राघवः

" प्रार्थनाया तदेव पुनरुक्तभूतं मा वृथा आवर्तय । अन्ये कुर्वन्ति मन्यन्ते च-यदि बहु उच्यते, ईश्वरो बाढ श्रृणुयादिति । तथा मा भूयाः । किं त्वया इष्यत इति, त्वत्प्रार्थनातः पूर्वमेव स पिता ते जानाति ।" माथ्यू, ६. ७, ८.

क्रैस्तवाचार्यः कश्चित् 'आर्चेञ्जल्'-नामकात् स्थानात् 'सोलोवेट्स्क्'-नामकं मठं नौमार्गेण जगाम । तेन सह तस्यामेव महानावि तत्रत्यानालयान् द्रष्टुं बहवो यात्रिकाश्च बभूवुः । यात्रा निष्प्रत्यूहा बभूव, अनुकूलो वातः, शीतोष्णस्थितिश्च सौम्यैव । यात्रिका नाव उपरितले शयानाः, भुञ्जानाः, सङ्घशो मिथः संभाषमाणाश्च आसन् । स आचार्योऽपि तदेव उपरितलमाजगाम । इतस्ततस्सञ्चरमाणेन तेन पुरतो नौमुखे तिष्ठन्तः केचन दृष्टाः, धीवरः कश्चित् समुद्रं निर्दिश्य तेभ्यः किमपि कथयन्नासीत् । सञ्चारं हित्वा स आचार्यः यस्यां दिशि धीवरः किमपि निर्दिशन्नासीत् तामेव न्यरूपयत् । न किमपि तत्र द्रष्टुं शशाक, केवलं सूर्यातपे समुद्र उज्ज्वलः प्रकाशते स्म । श्रवणार्थं निकटीभूते आचार्ये, धीवरस्तं निरीक्ष्य स्वशिरस्त्राणमपहाय, तूष्णीं बभूव । इतरे च तत्रत्याः तथैव उद्धृतशिरस्त्राणाः नेमुः ।

आचार्य आह - 'सुहृदः! मास्तु प्रक्षोभः ममागमनात्; अनेन साधुना उच्यमानं किमिति शुश्रूषुरहमागतः' इति ।

तेषु इतरेभ्यः प्रगल्भतरः कश्चिद् वृत्त्या वणिक् प्रत्युवाच - 'मुनीनधिकृत्य स धीवरः कथयन्नासीद्' इति ।

नौपार्श्वमुपसृत्य तत्र पेटिकोपरि उपविश्य आचार्यः पप्रच्छ - 'कान् मुनीनधिकृत्य? ताननतरा श्रोतुमिच्छामि, कथयत; युष्माभिस्तत्र जले निर्दिष्टं वस्तु किम्?' इति ।

ईषद्दक्षिणे किमपि स्थानं निर्दिशन् स वणिक् प्रत्युवाच - 'पुरतस्तत्र प्रतनु किमपि द्वीपं द्रष्टुं शक्यमेव ते; तत्रैव द्वीपे आत्मविमुक्तये ते मुनयः प्रतिवसन्ति' इति ।

'क्वास्ते स द्वीपः? नाहं यत्किमपि प्रेक्षे' इत्याह आचार्यः।

'मदीयहस्तदिशा यदि पश्येः, तत्र दूरे स दृश्येत; अपि तं स्वल्पं मेघं पश्यसि? तदधस्तात् किञ्चिदिव वामतः, कापि अस्पष्टा रेखा वर्तते; सैव स द्वीपः' इति।

आचार्यो निपुणं प्रैक्षत। अपरिचिताभ्यां तस्य नेत्राभ्यां न किमपि निरूपयितुं पारितम्, सूर्यातपे ज्वलज्जलमपहाय।

'नाहं तद् द्रष्टुं शक्नोमि; भवतु, के ते मुनयः, ये तत्र वसन्ति?' इत्याह आचार्यः।

धीवरः प्रत्याह - 'ते पावनात्मानः; चिरादेव श्रुतं मया तत्तत् तद्विषये; किंतु प्रपूर्वोद्वत्सरात् प्राक् न मे तद्दर्शनप्राप्तिरासीत्' इति। कथयामास च धीवरः- 'एकदा मत्स्यग्रहणार्थं समुद्रं गतोऽहं रात्रौ तस्मिन् द्वीपे लग्नः; कुत्राहं प्राप्त इति नाविदम्। प्रातः तत्र भ्रमन् मृन्मयीं कुटीमद्राक्षम्, अद्राक्षं च तत्पार्श्वस्थितं कमपि वृद्धम्। समनन्तरमेव द्वावपरौ बहिरागच्छताम्। मां भोजयित्वा, मे वस्त्रादि शोषयित्वा, मम पोतमपि निश्छिद्रमघटयन्' इति।

आचार्यः - 'कीदृशास्ते प्रत्यभान्?'

धीवरः - 'एको वामनो भुग्नपृष्ठश्च, आचार्यकञ्चुकधारी, अतिवृद्धश्च; मन्ये शताधिकवयस्कः; स तावान् वृद्धः यत्तस्य श्वेतं श्मश्रु हरिततां स्पृशति स्म, किंतु स सदैव स्मेरः, स्वर्गादवतीर्णाया देवताया इव तस्य मुखं वर्चस्वि आसीत्। द्वितीयस्ततोऽपि तुङ्गतरः; सोऽप्यतीव वृद्धः; कन्थाप्रायं कर्षकयोग्यं कञ्चुकं धत्ते; किंतु बलवानसौ; तस्य साह्यार्थं मदीयोद्यमात् प्रागेव तेन मदीयः पोतः फल्गुजलभाण्डवद् विपरिवर्त्तितः; सोऽपि सदयस्सहर्षश्च। तृतीयोऽपि उत्तुङ्गः, आजानु-लम्बि-तुषारधवलश्मश्रुः तीव्रप्रकृतिः लम्बमान-भ्रूः, कट्यामावेष्टितं तृणमयपरिधानखण्डमपहाय न किंचिद् धत्ते।"

आचार्यः - 'किं ते त्वया सह अभाषन्त?'

धीवरः - 'प्रायः ते सर्वं तूष्णीमेव चक्रुः, मिथोऽपि न किमपि अवदन् । तेषु तुङ्गतममहमपृच्छम् 'किं यूयमत्र चिरमुषितवन्तः' इति । स भ्रुकुटिं बध्नन्, कोपेनेव किंचिदुपांशु उच्चरति स्म । परं तु यस्तेषु वृद्धतमः स तस्य कुपितस्य हस्तमादाय मन्दं जहास, तुङ्गश्च शशाम । वृद्धतम इदमेवाह - 'दयां कुरु अस्मासु', इति; मन्दहासं च चकार ।

धीवरे वदत्येव नौर्द्वीपसमीपमाजगाम । 'अद्य स्पष्टमेव स द्वीपो द्रष्टुं शक्यः, यदि भवन्त. तत्र दृष्टिं दद्युः' इति साङ्गुलिनिर्देशं वणिगाह ।

आचार्यः प्रैक्षत; तत्वतस्तत्र नीलं रेखाप्रायं किमपि ददर्श; तदेव स द्वीपः । क्षणमात्रं दृष्ट्वा तदनन्तरं नावाः पश्चाद्भागं त्यक्त्वा अग्रभागमागत्य तत्रत्यं कर्णधारं पप्रच्छ - 'कोऽयं द्वीपः ?' इति ।

स प्रत्युवाच - 'तस्य नाम नास्ति; अस्मिन् समुद्रे तादृशा बहवः सन्ति' इति ।

आचार्यः - 'किं तत् सत्यं यत्तत्र स्वात्मोद्धाराय मुनयो वसन्तीति ?'

कर्णधारः - 'एवमेवोच्यते, किंतु तत् सत्यमिति न जाने; अस्माभिर्दृष्टा इति धीवरैः कथ्यते; किंतु तेषामियं वार्ता अभूतार्था च भवेत् ।'

आचार्यः - 'अस्मिन् द्वीपेऽवतीर्य तान् दिदृक्षे, कथमेतत् साधयिष्यामि ?'

कर्णधारः - 'द्वीपनिकटं नौर्न गच्छेत्; किंतु लघुपोतेन भवन्तं तत्र नेतुं पार्यते; नाविकपतिस्तथा निवेद्यताम् ।'

नाविकपतिराकारितः, आयातश्च । 'एतान् मुनीन् द्रष्टुं वाञ्छामि; मां लघुपोतेन तीरं नेतुं न शक्यते किम् ?' इत्याचार्य आह ।

अभिलाषादस्मादाचार्यो यथा विरमेत् तथा कर्णधारः प्रायतत । स उवाच - 'शक्यमिदम्; किंतु महान् कालविलम्बो भविता । इदमपि विज्ञापयामि-नार्हन्त्येते वृद्धा भवदीयमेतावन्तं श्रमम् । ते वृद्धा मूर्खाः, न किमपि अवगच्छन्ति, पदमेकमपि न भाषन्ते, समुद्रमीनादविशिष्टा इति मया श्रुतम् ।'

'तान् द्रष्टुमिच्छामि; अस्मिन् विषये यस्ते श्रमः कालक्षेपश्च स्यात् तदर्थं धनं दास्यामि; प्रसीद, पोतं देहि' इत्याह आचार्यः।

एतच्चानिवार्यमभूत्; तत आज्ञा दत्ता । नाविका कूपदण्डे पटं प्रसारयामासुः, नौश्च द्वीपाभिमुखं प्रचचाल । नावः पूर्वमुखे आचार्यार्थमासन्दी सज्जिता, यत्रोपविश्य स पुरतो वीक्षमाण आसीत् । तस्मिन्नेव स्थले प्रायाणिकाः सर्वे मिलिता द्वीप एव बद्धदृशो बभूवुः । ये तेषु पटुतमदर्शनाः ते द्वीपस्थान् गिरीन् द्रष्टुं शेकुः; ततो मृन्मयी कुटी च लक्षिता । अन्ते तेष्वेकः तान् मुनीनेव साक्षाच्चकार । नाविकपतिः दीर्घदर्शियन्त्रमानाय्य तद्द्वारा ददर्श; आचार्याय च तदुपकरणं ददौ।

'बाढं, सत्यम्, तीरे त्रयः पुरुषास्तिष्ठन्ति, ते तस्य बृहतो गण्डशैलस्य किञ्चिदिव दक्षिणतस्तत्र सन्ति।'

आचार्यो दूरदर्शनोपकरणमादाय, समीकृत्य, ददर्श तान् त्रीन् पुरुषान्-तुङ्गमेकं, वामनमेकम्, अत्यन्तवामनं भुग्नपृष्ठमपरं च, तत्र तीरे स्थितान् अन्योन्यबद्धहस्तान् ।

नाविकपतिराचार्याभिमुख आह - 'इतोऽपि निकटतरं नावा द्वीपाभिमुखमुपसर्पितुं न शक्यम्; यदि तीरं प्रति जिगमिषा, लघुपोत आरुह्यताम्; वयमत्रैव नावि स्थास्यामः' इति।

रज्जुर्जवेन क्षिप्ता, नौस्थापक आयसगोलश्च क्षिप्तः, कूपपटश्च संक्षिप्तः; नौः किंचित्संघट्टेन चकम्पे; लघुपोतः जलेऽवतारितः, केनिपातिनस्तस्मिन्नवप्लुताः, आचार्यो निश्रेण्या अवततार, उपविवेश च। पुरुषाः केनिपातान् चकर्षुः, पोतश्च द्वीपाभिमुखं त्वरितं चचाल।

अश्मक्षेपदूरे समागतास्ते त्रीन् वृद्धान् प्रैक्षन्त - तुङ्गं वलग्नलग्नतृणमयकुथखण्डम्, ततो ह्रस्वं कन्थाप्रायकर्षककञ्चुकधरम्, वृद्धतमं वयसा भुग्नं, पुराणकञ्चुकधरं च । त्रयोऽपि अन्योन्यधृतहस्तास्तीरे तस्थुः ।

अरित्रव्यापृताः पोतं तीरोपान्तमानीय स्थापयामासुः; आचार्यो यावद्वारुरोह तावत्पोतं वक्राङ्कुशेन निश्चलं दध्रुः।

ते वृद्धा आचार्यं प्रणेमुः, तेभ्य आचार्य आशिषो ददौ, या गृहीत्वा ते नम्रतरं नताः। तत आचार्यः तैरालपितुमुपचक्रमे।

आह आचार्यः - 'श्रुतं मया यद् यूयं देवप्राया मनुष्या अत्र आत्मविमुक्तये अन्येषां जनानां कृते च क्रिस्तुमस्मत्प्रभु प्रार्थयमाना वसन्ति इति। क्रिस्तोरहमनर्होऽपि सेवको देवस्य अनुकम्पया तत्प्रजा रक्षितुं शिक्षितुं चाज्ञप्तः। ईश्वरभृत्यान भवतो द्रष्टुं, यावच्छक्ति भवतः शिक्षितुं च ऐच्छम्' इति।

वृद्धास्ते समन्दहासमन्योन्यं दृष्ट्वा जोषमासन्।

आचार्यः - 'आत्ममुक्तये कि भवन्तः कुर्वन्ति, अस्मिन् द्वीपे कथं भगवत्सेवां चानुतिष्ठन्तीति कथयत।

द्वितीयो मुनिः निशश्वास, वृद्धमवैक्षत च। स प्राचीनतमश्च समन्दहासं जगाद -

'भगवन्तं कथं सेवामहे वयमिति न जानीमः; भगवत्किङ्करभूतान् आत्मन एव सेवमाना धारयमाणाश्च वर्तामहे' इति।

आचार्यः - 'किंतु कया विधया भगवन्तं भवन्तः प्रार्थयन्ते?'

मुनिः - 'एवं प्रार्थयामहे - "यूयं त्रयः, वयमपि त्रयः, अस्मासु सदया भवत" इति।'

एतद्वचनान्ते द्युलोकाभिमुखं चक्षूंसि उन्नामयन्तः पुनरप्यावर्तयामासुः - "यूयं त्रयः, वयं त्रयः, अस्मासु सदया भवत" इति।

आचार्यो मन्दं जहास। दैविकं मूर्तित्रयमधिकृत्य भवद्भिः किमपि श्रुतमिति भाति। परंतु भवद्भिः प्रार्थना न समीचीना क्रियते। मदीयं प्रेम भवद्भिः दिव्यात्मभिः प्राप्तम्। भगवन्तं प्रीणयितुं भवन्तो वाञ्छन्तीति मन्ये, किंतु स भगवान् कथं सेवितव्य इति न जानन्ति। न स प्रार्थनाप्रकारः यो भवद्भिः क्रियते; अवधत्त मे, शिक्षिष्ये भवतः। शिक्षिष्ये च न स्वच्छन्दानुसारं, किंतु यथा भगवतैव स्वाम्नाये आज्ञापितेन प्रार्थनाक्रमेण इत्यवादीत्।

मुनिभ्य आचार्यः 'कथं भगवान मनुष्येभ्य आत्मानमाविश्चक्रे, भगवान् पितृरूपः, तत्सुतरूपः, आत्मरूपश्च इत्यादि व्याचख्यौ च। मनुष्यानवितुं

भगवान् सुतरूपो पृथिव्यामवततार; स एवमेव प्रार्थनाप्रकारं च शिक्षयामास; अवधत्त, वदन्तं मामनु वदत - "अस्माकं पिता -"

"अस्माकं पिता" इति प्रथमो वृद्धोऽन्ववोचत्, तथैव द्वितीयस्तृतीयश्च ।

"यो द्युलोके वर्तते" इत्यवददाचार्यः । तदन्ववदत्प्रथमः; द्वितीयः पदेषु चस्खाल; तुङ्गो मुनिस्तद्यथावद् वक्तु नापारयत् । तस्य श्मश्रूणि मुखोपरि रूढानि, स्पष्टमुच्चारयितुं न प्राभवत् । वृद्धतमश्च मुनिः निर्दन्तः अव्यक्तं जजल्प ।

आचार्यः पदान्यावर्तयामास, तमनुसृत्य वृद्धाश्चावर्तयामासुः । आचार्यः शिलायामुपविवेश, ते वृद्धा तत्पुरः स्थिताः तद्वदनावलोकिनः तदुच्चारणानुरूपं पदान्यनूचुः । पदं पदं विंशतिवारं त्रिंशद्वारं, शतवारं च उच्चारयन् आचार्यस्सर्वं दिनं परिशश्राम; वृद्धाश्चानुकुर्वन्तस्तदवोचन् । तेषामपभ्रंशा आपतिताः, आचार्यः समादधे, तान् सम्यगुच्चारणाय पुनः पुनः प्रेरयामास ।

प्रभुप्रार्थना सर्वापि यावत्तैः शिक्षिता यावच्च ते न केवलमनुवक्तुम अपि तु स्वयमेव वक्तुमपि शक्नुयुः, तावन्न मुमोच आचार्यः । अवधारणे स्वयमावर्त्तने च मध्यम एव प्रथमो बभूव । तं पुनरावर्तयितुं चोदयामास; अन्ते इतरावपि स्वयमेव तथा कर्तुं प्राभवन् ।

यावता आचार्यो नावं प्रत्यागन्तुमुत्तस्थौ तावता तम् आससाद, सलिलोपरि चन्द्रोऽप्यदृश्यत । आपृच्छमान आचार्ये तत्पुरतस्ते वृद्धा आभूमितलं प्रणताः । तानाचार्य उत्थाप्य, प्रत्येकं चुचुम्ब, यथोपदिष्टं प्रार्थनां कुरुतेति च तानाह । ततः पोतमधिरुह्य महानावमाजगाम ।

पोतारूढो महानावं प्रत्यागच्छन्नाचार्यः प्रभुप्रार्थनामुच्चैर्वाचा उच्चारयतः त्रीनपि मुनीन् शुश्राव । महानौसमीपमागते पोते, ता वाचः श्रवणयोग्या न बभूवुः, किं तु त्रयो मुनयो ज्योत्स्नायां दर्शनयोग्याः, यथापूर्वं तीरे तथैव तिष्ठन्तः - कुब्जतमो मध्ये, तुङ्गतमो दक्षिणे, मध्यमप्रमाणः वामे ।

आचार्ये महानावमधिरूढे, स्थापनार्थो लोहगोल उद्धृतः, कूपपटो विस्तारितः, तं वायुरापूरयत्, नौश्च प्रचचाल। नावि पश्चाद्भाग उपविष्ट आचार्यः पृष्ठतस्त्यक्तं द्वीपं निरूपयामास। किंचित्कालं मुनित्रयं द्रष्टुं प्राभवत्। किंतु शीघ्रमेव ते दर्शनपथाच्च्युताः। द्वीपस्तु दृश्य एवासीत्, किंतु तदप्यन्ते अदृश्यो बभूव, केवलं ज्योत्स्नायामूर्मिलः समुद्र एव अदृश्यत।

यात्रिका निद्रां गताः, नावि सर्वं स्तिमितं बभूव। आचार्यस्तु अनिदिद्रासुः नौकोण एकाकी उपविष्टः यत्र द्वीपोऽदृश्यतां गतः तस्मिन् समुद्रभागे लग्नदृष्टिः, तानेव वृद्धसाधूंश्चिन्तयमानश्चासीत्। चिन्तयामास च मनसि 'प्रभुप्रार्थनां शिक्षमाणानां तेषां कियान् मनःप्रसादः' इति। तादृशान् देवदृशान् पुरुषान् शिक्षयितुमुपकर्तुं च आत्मानं प्रेषितवते भगवते स्वकृतज्ञतामाविश्चकार।

एवमुपविष्ट आस आचार्यः, चिन्ताक्रान्तः, समुद्रे यत्र द्वीपो विलीनः तदेव स्थलं वीक्षमाणश्च। चक्षुषः पुरस्तात् ज्योत्स्ना चञ्चला, वीचीषु क्षणमत्र तत्रेति विद्युते। झटिति समुद्रजलोपरि ज्योत्स्नारचिते भ्राजमाने पथि किमपि धवलं द्योतमानं च ददर्श। 'कि तत्? य कोऽपि जलपक्षी? उत फल्गुपोतस्य कस्यापि शुभ्रः प्रतनुः कूपपटः?' विस्मित आचार्यः तस्मिन्नेव दृष्टिं बबन्ध।

'पोतान्तरमस्मानेवानुद्रवति; अथवा वेगेन अस्मानतिक्रमिष्यति! क्षणात्पूर्वं सुदूर आसीत्, अद्य तु निकटतरमागतम्; नेदं पोतः, कूपपटी न दृश्यते; यद्वा भवतु, तदस्माननुधावति, आसादयति च।'

किं तदिति न निर्धारयितुं शशाक; न पोतः, न पक्षी, न मत्स्यः! बृहदाकृति न मनुष्यो भवितुमर्हति, किंच समुद्रमध्ये तथा आगन्तुं न मनुष्येण शक्यते। उत्तस्थावाचार्यः, कर्णधारमुवाच-

'पश्य, किं तत्, किं तत्? इत्यभ्यासेनाह। संप्रति कि तदिति स्पष्टं द्रष्टुं प्रबभूव - त एव त्रयो मुनयः, धवलं विभ्राजमानाः सलिलस्य मध्ये धावन्तः, द्योतमानारुणश्मश्रवः, तथा जवेन नावमासादयन्, यथा नौरेव

निश्चल इव बभौ । कर्णधारः प्रैक्षत, भिया कर्णं तत्याज । 'भगवन्! अस्मानेवोद्दिश्य शुष्के भूतल इव जले धावन्त्येते मुनयः!"

कर्णधारवाचः श्रुत्वा प्रायाणिका उज्झम्पन्ते स्म, संघीबभूवुश्च तत्र नौकोणे । हस्तेन हस्तं गृहीत्वा आगच्छतो मुनीन् ददृशु', पार्श्वस्थौ द्वौ च 'नौः स्थाप्यताम्' इति संज्ञापयन्तौ च ददृशुः । अपादचालं जलोपरि ते त्रयोऽपि अप्लुवन्त । नौस्थापनात्पूर्वमेव तैस्सा समासादिता । करानुद्धृत्य एकयेव वाचा ते त्रयोऽप्यूचुः-

'हे भगवत्किंकर! यत्त्वया उपदिष्टं, तदस्माभिः विस्मृतम्; यावत्तदावर्तयमाना अभूम, तावत् तत्स्मृतावासीत्; किंतु कमपि कालं यदा तन्नावर्तयाम, तदा पदमेकं भ्रष्टम्; अद्य तु सर्वमेव छिन्नम्; तत्र लेशमपि न स्मरामः; पुनश्चास्मान् शिक्षय' इति ।

विचिकित्समानः नौपार्श्वे लीनाङ्गः आचार्यो व्याजहार-

'हे भगवत्पुरुषाः! भवदीयैव प्रार्थना भगवन्तं प्राप्स्यति, न मया भवन्तः शिष्याः; अस्माकं पापिनां कृते यूयं प्रार्थयत भगवन्तम्' इति ।

तेषां वृद्धानां पुरत आचार्यो नितरां प्रणम्रो बभूव; यत्र ते अदर्शनं गताः, तस्मिन् प्रदेशे आ प्रातः किमपि ज्योतिर्व्यद्योतत ॥ (१८८६)

## "वयं सूक्तिप्रणेतारः"

अरहर्डीकरः

प्रज्ञा—ननु अशोक, दृष्टं त्वया एतद् वृत्तजातम्? यत् पुरातनविचाराणां हापनाय यूनां समेषां संयोजनमायोजितमिति?

अशोकः—ननु भणामि क? कुत्र?

प्रज्ञा—अद्यैव मोहमय्याम्, सत्यं नु सुधे?....

अशोकः—मुम्बय्यामिति वा, बॉम्बे इति वा भण। वदति नाम मोहमय्याम्! अरे किमत्र मोहकारणं वर्तते? यस्य कस्यापि वा विशेषनाम्नोऽपि एतादृशं भाषान्तरीकरणं नाम केवलं विचारवन्ध्यता। अत्र तु किं नाम तत् मोहजातं यद् दृष्ट्वा मोहे न्यपतेयम् इति न शक्यते अवधारयितुम्।

प्रज्ञा—बाल अशोक, तर्हि नाम सम्यगवधारय। केवले नामोच्चारकमात्रके एव अलम् असहिष्णुताप्रदर्शनेन। अरे! प्रपूर्वेद्युरेव मया वाचितम्, केवलमेकम् एव वच्मि उदाहरणम्, यत् सेवार्थमत्र द्वित्रिवर्षाणि उषित्वा, महाराष्ट्रियत्वेन स्वं ख्यापय्य निवसनार्थं शरणीकुर्वन्ति परप्रान्तस्था मुख्यमन्त्रिणम् अत्रत्यम्। मोहमयीति नाम्नः सार्थतां प्रदर्शयितुम् एतत्तु अतीव शोभनं समर्पकम् उदाहरणम्।

अशोकः—बाले 'इत्थीपञ्जे?'

प्रज्ञा—किमेतत् 'इत्थीपञ्जे'ति? नायं संस्कृतशब्दः। केऽपि शब्दाः ग्रहीतव्याः, तत्र पाणिनीयप्रत्ययाः संयोजयितव्याः। अपि च पदानि निर्मातव्यानि इति नास्ति नियमः।

अशोकः—सुधे! किमपि कथय एतस्यै अज्ञातसंस्कृतायै ।

सुधा—प्रज्ञे सुमित्रा नास्ति अज्ञातसंस्कृता । प्रज्ञे, 'इत्थीपञ्ञा' इति च शब्दः बौद्धवाङ्मये पालीभाषायां वर्तते! ते तु स्त्रीजातम् उद्दिश्य 'द्वयङ्गुलमात्रा इत्थीपञ्ञा' इति शब्दं योजयन्ति स्म । तेषां मतेन स्त्रियः प्रज्ञा द्वयङ्गुलमात्रपरिमिता । पुरा तु स्त्रीणां विशेषतः कार्यद्वयम्—एकं वस्त्रसीवनम्, अपरं तु पाकनिष्पादनम् । उभयत्रापि केवलानाम् अङ्गुलद्विकानाम् आवश्यकता वर्तते । तदेव स्त्रीणां कार्यम् इति मन्यमानैः तथागतभक्तैः बौद्धैः स्त्रीजातम् उद्दिश्य शब्दोऽयं योजितः ।

प्रज्ञा—(कोपेन) नाहं वक्तुकामा अस्मि त्वया सह यदि ह्वयसि माम् इत्थीपञ्ञा इतिशब्देन । वयम् आधुनिकाः इति सदैव ठण्ठण्यते त्वया, अपि च यदा स्वोपयोगी किमपि तदा जीर्णमृतानि आधारार्थं ग्रहीतव्यानि । धन्या ते पुरोगामिता नाम । अपि च नेदानीं स्त्री इत्थीपञ्ञा नाम । सा इत्थीपञ्ञा एव पुरुषगौरवगायनं भवत्सदृशं कोटिसङ्ख्याकं भारतीयजनम् अभिरक्षतीति सम्यगवधारय । (आगच्छन्तं मातरम् उद्दिश्य) मातः! आगच्छ आगच्छ, कथय एतं नूतनविचारपुङ्गवम् आधुनिकशिरोमणिं, सूक्तिप्रणेतारं, पुरोगामिनं, भवत्प्रेष्ठं किमपि; मां तु 'इत्थीपञ्ञा' इति शब्देन योजयति ।

माता—प्रज्ञे, प्राचीनादपि वाङ्मयाद् यद् रोचते तद् ग्राह्यं भवति इत्येतत् प्रदर्शितं नु एतेन । किं सुधे, किं ते मतम्?

सुधा—अशोकौ (हसतः)

प्रज्ञा—ॐ ऽ-ऽ-ऽ-ऽ अपि नाम अत्रभवती मातृचरणा एतेषां महाभागानाम्? न्यायाधीशा इति कृत्वा पृष्टवती अन्ततो गत्वा मातेति सिद्धम् ।

यूनां सम्मेलनम् अत्र मोहमय्यां भविता इति कथयितुकामा तपस्विनी अहं केवलं मोहमयी इति शब्दे उच्चारिते एतेन भाषाशास्त्र-विशारदेन पण्डितपुङ्गवेन एतादृशं ताडिता या अन्ततो गत्वा इत्थीपञ्ञेति शब्देन योजिता! किं बी. ए. परीक्षायां प्रथमां श्रेणिं धारयित्री अपि अहम् इत्थीपञ्ञा? अपि च बी. ई. परीक्षायां द्वितीयां श्रेणिं धारयन् यत्र क्वापि वृत्तिमलभमानः एषः विद्वच्छिरोमणिः ?

सुधा—प्रज्ञे! केवलं विनोदाय कल्पते अशोकवाक्यम् । न याथातथ्येन अर्थे कुरु दृष्टिपातम् । वयमिदानीन्तने काले एकेनैव यानेन कुर्मः प्रवासम् । अस्मासु एव कलहकलकलः यदि जायते तर्हि को नाम प्रश्नान् समुत्तरितुं प्रयत्येत ?

अशोकः—अपि च प्रज्ञे, जानामि जानामि ते प्रथमश्रेणिगतां बुद्धिचातुरीम् । ननु बुद्धिमति, परीक्षार्थिनः कथं परीक्ष्यन्ते इति नैव वा अवगम्यते त्वया? नैषा परीक्षा ज्ञानस्य ज्ञानवतो वा, बुद्धिमतां बुद्धेर्वा! बाबावाक्यं प्रमाणमिति मन्यमानैः द्रविणाशयैः अन्धैः खलु पुष्पितः फलितः अयं परीक्षातरुः वञ्चनातरुरिति अपरनामधेयः । यमारुह्य प्रभवन्ति च मूर्खशिरोमणयः प्रथमया श्रेण्या अलङ्कर्तुं स्वात्मनः । एतदर्थमेव इमानि यूनां संमेलनानि अवश्यंभाव्यानि ।

सुधा—एतत्तु सम्यग् उक्तम् । मयापि नैकवारम् अनुभूतमेतत् । एतदपि मया अनुभूतं, प्रज्ञे, केचन परीक्षकमहोदयाः प्राश्निकाः, प्रेष्ठान् परिचाययन्ति परीक्षायाः पूर्वमेव प्रश्नान् । तस्मान्नैकदा गुणिषु विद्यार्थिषु अन्याय्यमार्गस्य आचरणं प्रभवति ।

अशोकः—शृणु शृणु प्रज्ञे, मित्रवचस्ते । विश्वासो जातो वा न वा परीक्षासिद्धहस्तानां श्रेणीदानपराणां विद्यापीठानां निर्णयदाने परीक्षायाः ।

माता—भवतु नाम सकलं सकलं तत्, प्रथमं तु एतत् कथय किमेतद् यूनां सम्मेलनं नाम? किमर्थमेतत् ? अधुना तु यः कोऽपि उत्तिष्ठति, स्वस्वभावानुसारं कांश्चन परितः आनयति, सम्मेलनादिकं कृत्वा तस्य नेतृत्वमापाद्य स्वस्यैव लाभाय यथा तत् सकलं कल्प्यते तथैव तत् कारयति । ननु नास्ति नाम एतादृशं किमपि भवत्सम्मेलने ।

अशोकः—ननु वदामि अत्रभवत्सदृशाः पितर एव अस्मदीयाः एतस्य सम्मेलनस्य आदिकारणम् । भवत्सदृक्षैरेव केचन प्रश्नाः अस्माकं पुरत उपस्थापिताः । तान् प्रश्नान् उत्तरितुमेव अस्माकं विद्याग्रहण-व्रतानां कञ्चित् कालं दूरमपसार्य सम्मेलनानि एतादृशानि भवन्ति ।

माता—किं नु नाम वदसि, प्रश्नाः अस्माभिरेव उपस्थापिताः समस्यानाममीषाम् अस्मत्सदृक्षाः पितर एव कारणमिति? शक्नोषि वा कथयितुमपि के के ते प्रश्ना इति । अथवा कृत्वा मुखमाकाशे किमपि उच्चैः स्वैः गर्जितव्यमिति तरुणानां तरुणत्वम्?

अशोकः—नास्ति एतादृशं किमपि अम्ब! इदानीन्तनानां तरुणानां पुरतः, सत्यं कथयामि नु नैके प्रश्नाः वर्तन्ते । भवत्कालादा इमे प्रश्नाः भवेयुः इति मन्ये । कदाचिद् भवद्भिः, अमीषां भाविनि काले भविष्यन्तं स्वरूपं सकलं नैव अवगतं स्यात् । अधुना ते तु सूर्यप्रकाशवत् स्वच्छाः क्रुद्धसिंहवत् च भक्षयितुमिव अस्मान् पुरतः स्थिता इव दृश्यन्ते ।

सुधा—कथमेते प्रश्नाः प्रथमतः अज्ञानस्वरूपैः भवद्भिः नैवावगता इति । स्वस्य सर्वे पुत्राः लोकसत्तायामेतस्यां लभन्तां सर्वाणि सुखानि इति कृत्वा बुद्धिमद्भिः आङ्ग्लभाषाविरोधाय लोकाः उद्योजिताः । स्वकीयान् पुनः कथमेते शासनाधिकारिणः भविष्यन्तीति चिन्तयित्वा तान् भाविकालसमयज्ञैः तैः तत्तच्छिक्षणं दत्त्वा अधिकारिणः तान् कृतवन्तः । अपरे तु ये नैव एतद् ज्ञातवन्तः, तेषां पुत्राः बुद्धिमन्तोऽपि तथैव स्थिताः ।

प्रज्ञा—हुम् ! एतदेव वक्तुकामा आसम् । अपरं च सदैव इतिहासशरणता । संस्कृतिभक्तिरिति नाम अविचारयित्वैव किमपि अन्धसदृशं कुर्वन्तीमे पुरातनाः ।

सुधा—संस्कृतिविषये तु न किमपि वदामः । पश्यत मातः, भारतीयाः सहिष्णवः वर्तन्ते, वात्सल्यं प्रेम, पितृमात्राज्ञापरिपालनं, गुरौ भक्तिः इति नैकेषां गुणानां कृते भारतीयाः अभिमानेन स्वान् प्रति अङ्गुलिनिक्षेपं कुर्वन्ति । अस्माकं सदने कति जनाः तिष्ठन्ति? नैके, एकः अपरं प्रति कां भावनां धारयतीति पश्य । मुखे एकम्, आचरणे अपरम्, (वाचोयुक्तिस्त्वन्येति) वयमेव आश्चर्यजातमेतत् कर्तुं पारयामः ।

माता—एतत्तु विचारणीयं नाम ।

अशोकः—अयि मातः, अधुना नैव किमपि विचारणीयं नाम ! विमृश्य विमृश्य च तरुणाः करुणावलये निपतिता दृश्यन्ते । परस्परविरुद्धयोः धर्मयोः एकभावस्थानम्, एकेनैव तेषां तेषां धर्माणाम् आचरणं नाम नैव संस्कृतिः या प्रोच्चैः उच्यते । नैव वा इतिहासाभिमानिता । प्रत्युत सकलमेतद् दोषाय कल्पते ।

माता—किं सुधे, प्रज्ञे! उभयोरपि विचारोऽयम् अभिमतः?

सुधा—अस्माकं हृदयचर एव विशेष एतन्मुखाद् आगतः। एते ते सन्मार्गप्रापकाः अस्माकं संस्कृत्याम्, ये भक्षकत्वेन धर्मस्य विराजन्तेतराम्। केषु विश्वासः, धर्ममार्तण्डा अपि तथा, इतरे अपि तथा। अतः न किमपि वक्तुमीहा।

प्रज्ञा—अम्ब, पश्यतु भवती न्यायालयम्, कुटिलतमत्वेन ख्यातोऽपि निर्दोषोऽयम् इति कृत्वा निर्दोषत्वं धारयते, निर्दोषश्च सदोषताम्। न्यायालये अपि तरुणानां न वर्तते श्रद्धा तस्य कारणमिदमेव।

अशोकः—तात! शासनेन जनकल्याणार्थं नियुक्ताः अधिकारिणोऽपि कथं वर्तन्ते? ज्ञायते? ते सदैव स्वार्थपराः। नियमानां तत्त्वम् अज्ञात्वा विरूपावस्था, विरुद्धार्थश्च प्रदर्श्यते अधिकारिभिः। तदर्थं ज्ञात्वा अपि सकलमेतत् किमपि कुर्वन्ति वा मन्त्रिणः? शासनमिति कस्य? क्व वर्तते नाम? मत्तेषु अधिकारिषु, उद्धतेषु राजपुरुषेषु दण्डः शासनस्य भवितव्यः। भवति वा सः?

माता—सकलं सकलमेतत् सत्यमेव। नात्र संशीतिलेशोऽपि। एतत्तु नैवावगम्यते यदत्र वस्तुनि कथं वयं प्रमाणभूताः? कथमुत्तरदायिता सर्वस्य एषा अस्माकं शिरसि निक्षिपन्ति भवन्तः।

प्रज्ञा—भवन्तः अपि रूढिशरणीकृताः, प्रतिभातमपि नैव प्रतिभातम् इति दर्शयन्ति नैकदा। किमपि दृष्ट्वा तत्प्रतिरोद्धुमपि नैव शक्नुवन्ति। एतत् तु कार्यं भवद्भिः युवावस्थायां कर्तव्यम् आसीत्; नैव तत्कृतमिति अधुना अस्माभिः क्रियते।

माता—समीचीनम्। बाढम्। समाचरन्तु भवन्तः भवत्यः च सुखेन सकलमपि, नवीनमतजालं च प्रविशन्तु यदस्माकं श्रेयसे तत् कर्तुम्

उत्साहभरिताः युवानः पुरत आगत्य किमपि कुर्वन्ति तर्हि शते पञ्चाशत् इव अस्मत्सदृक्षा अपि समाजस्य अस्य सकलस्य श्रेयसे तत्र समापतेयुः । परन्तु सर्वथापि सम्यगवधेयं यद् अविचारेण आततायिभिः किमपि कर्तुं नैव शक्यते । भारतस्य युवानः यदि विचारवन्ध्यताम् आततायिताम् अवलम्बन्ते सदा भारतस्य सुपुत्रैः महत्प्रयत्नलब्धं जीवितान्यपि अविगणय्य सम्प्राप्तं स्वातन्त्र्यमेतत् संशये सम्पतेत् ।

अशोकः—मातः, विश्वासं धारय, न तादृशं किमपि विचारजालं यूनां मनांसि अधिरोहति । प्रतिदिनं तु ये प्रश्नाः प्रादुर्भवन्ति तेषां सम्यग् उत्तरं तु नैव लभामहे । श्रेष्ठानां, प्रेष्ठानां, गरिष्ठानां सम्बन्धिनः सत्वरमेव लभन्ते सेवावृत्तिम, परमोच्चपदवीं च, समाजे सम्मानम् अपि धारयन्ति । ननु अशोक, त्वमपि नाम यस्य कस्यापि गरिष्ठस्य अधिकारवतो वा सम्बन्धी भव । तदैव फलिष्यति अयं भागधेयतरुस्ते । [सर्वे हसन्ति]

सुधा—न वयमिच्छामस्तादृशमपमार्गम् ।

सुमित्रा—ननु सुधे! वयमित्येतेन किं विद्योत्यते?

सुधा—न किमपि । मातः, बुद्धिमन्तः लब्धोच्चश्रेणीपदवीकाः सर्वेऽपि नाम किमिति स्वदेशं सन्त्यज्य परदेशं गच्छन्ति, तत्रत्यं नागरिकत्वं स्वीकुर्वन्ति च? येषां ज्ञानस्य भारतस्य कृते अतीव आवश्यकता, ते नाम स्थापत्यविदः शरीरविचिकित्सकाः किमिति परदेशं नागरिकत्वेन स्वीकरणार्थं प्रार्थयन्ते?

माता—स्वदेशस्य परिस्थितिः तैः सम्यग् ज्ञाता नैव स्यात्, स्वदेशप्रेम न स्याद्, भारतसदृशे दारिद्र्यसहोदरे देशे देशान्तरे लभमानानि सुखानि नैव लभ्यन्ते ।

अशोकः—मातः, नास्ति तत्कारणम्। देशप्रेम दर्शयित्वा स्वदेशभूत्यै यतमानानाम् अनेकेषां श्रमाः, मनांसि, प्रयत्नाः व्यर्थतां गताः। स्मर्यते वा द्वित्रिवर्षेभ्यः प्राक् रसायनशास्त्रे भारतीयेन, परन्तु अधुना अमेरिकानागरिकेन केन नोबेल् पारितोषिकं लब्धम् इति?

माता—स तु डॉ. खोराणा, किं तस्य महाभागस्य?

अशोकः—वृत्तपत्रैः साकं तस्य वार्तालापः समजनि। स तु कथयति—भारते तस्य स्वदेशोऽयमिति कृत्वा नितान्तं हार्दं प्रेम। परदेशगमनात्पूर्वं विनन्तिपत्रकं हस्ते धृत्वा सेवालब्धये सकलमपि भारतम् आहिण्ड्य आहिण्ड्य नैव सेवावृत्तिः तेन भारते लब्धा। यत्र क्वापि तेन लब्धव्या आसीत् सेवावृत्तिः तत्र डॉ. खोराणा-अपेक्षया कनिष्ठ-योग्यताकः तस्य वरिष्ठत्वेन आसीत्। स्वदेशत्यागे एतदेव महत्कारणम् इति तेन सङ्कथितम्।

माता—तेन तु किं जातम्; अमेरिकावासी अपि डॉ. खोराणामहोदयः मूलतः भारतीयः इत्येव प्रोच्यते जनेन नु?

प्रज्ञा—नास्ति तादृशम्। येयं हानिः भारतस्य सञ्जाता सा केन अन्येन अन्येन उपायेन पुनरपि प्राप्तव्या भवेत्?

माता—ज्ञायते, प्रज्ञे ज्ञायते, सर्वमिमं प्रश्नजातं सुखेन ज्ञायते मया। यन्मया अधुना दृश्यते तेन कथयामि यत् विद्यार्थिभिः तरुणैः आततायिनां मार्गो नैव अनुसर्तव्यः। भारतसदृक्षे महति देशे, दारिद्र्यमेव यस्य शरणम्, अज्ञानमेव यस्य परम्परागतः धनराशिः, विभिन्नमति-प्रणालिप्रदर्शने रतिप्रकटनं तु यस्य अभिमानः, अनेकत्र एकत्वं पश्यन्तु, इति यत्रत्यं तत्त्वज्ञानम्, विभिन्नसंस्कृतिविश्वासधारणं नाम यस्य अनतिसाधारणं वैशिष्ट्यम्, तत्र समेषाम् अमीषां

प्रश्नानां सन्दाहकं स्वरूपं सम्यग् अवबुध्यते अस्माभिः । कथमिमे प्रश्नाः समुत्तरणीयाः इत्येव भवत्सदृक्षैः सर्वैः सह अस्माभिः विमर्शनीयम् ।

सुमित्रा—मातः, तपसः इयं विमर्शने एव मतम् । तत्र ये आदावेव श्रीमन्तः ते विभवमधिकं समासादितवन्तः; ये तु दारिद्र्यसहोदराः ते अधिकं दरिद्राः सञ्जाताः इति दृष्ट्वा पुनरपि अधिककालयापनं नाम जनानां भारतवासिनां महत दुःखाय कल्पेत । नास्ति संशयः ।

माता—वत्से, ज्ञातं मया सर्वमेतत् । परं न तत्र सर्वदा परे एव दोषभागिनः, वयमपि दोषभागिनः । कदाचित् परदोषप्रदर्शनम् एतेन साध्येत । परन्तु यदि स्वात्मा पृच्छयते, मया भारतवासिना देशस्य अस्य कृते किमपि कृतं वा? देशस्य ऋणं न् माचितोऽस्मि वा? मम देशसाह्याय्ये या उत्तरदायिता सा निर्वोढा वा?—अपि च नाहं मन्ये सर्वदैव नेतारः एव दोषभागिनः । अस्माकं तत्र वस्तुनि भागः अपि बोद्धव्यो भवति ।

सुधा—सत्यमेतत् । अस्माकम् अध्यापिका अपि तथैव वदति । सा कथयति इमे सर्वे विध्वंसका न विधायकाः, विधायकेभ्यः विचारेभ्यः एव किमपि कर्तुं देशस्यास्य सर्वतोमुखीं प्रगतिं साधयितुं शक्येत ।

अशोक—विचारः एषः न अस्माकं अनभिमतः । परन्तु विधायक-कार्यकर्तॄणां ये सङ्घाः वर्तन्ते तेषामिदानीं का अवस्था? कुत्र च तेषामनुयायिनः? परिपालयति वा तान्, अवरतः सम्मानयति वा?

माता—आम, अयमेव आदर्शः । देशस्यास्य कल्याणार्थं यैः आयुः व्ययीकृत्य, सम्मानं सुदूरं स्थापयित्वा, मानापमानयोः विचारः अपि

नैव मनसि आनीतः, हव्यलालसा नाम्नापि न येषु तिष्ठति, येषां सकलमाचरणं सह श्वासोच्छ्वासेन देशस्यास्य हितमेव चिन्तयति ते एव पुरतः स्थापनीयाः तरुणैः भवत्सदृशैः । पुरातनात् कालाद् आरभ्य इमे प्रश्नाः वर्तन्ते । अत एव 'सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्' इति उपदेशः ऋषीणाम् ।

**अशोकः**—मातः उपदेशोऽयं साधीयान्; परन्तु अपरमपि—

**माता**—अपरं किमपि नैव वर्तते । विरोधार्थं विरोधप्रदर्शनशीलैः कैश्चन यत् क्रियते तत् न सर्वथा विश्वासार्हम् । सर्वैः अस्माभिः देशस्यास्य कल्याणार्थं यतमानैः भाव्यम् । सर्वेषां विमर्शने स्यान्नाम कदाचित् व्यक्तिः, व्यक्तिसमूहः कश्चन दुःखितः, परन्तु सागरसदृशं समाजमेतं भारतस्य दृष्ट्वा तेषां सहायसंख्याकानि यानि दुःखानि वर्तन्ते तानि दृष्ट्वा स्वानि दुःखानि अविगणय्य स्थातव्यं, प्रगतिश्च साधनीया । किं सुमित्रे, सुधे, रोचते वा अयं विचारः ।

**उभौ**—अयमेव मूलः विचारः, परन्तु अधुना किमपि किमपि वाचयित्वा बुद्धिः प्रसरीसरीति । किमपि अन्यदेव सा चिन्तयति । मूलं प्रश्नस्य स्वरूपं दूरीक्रियते तेन । पूर्वजान् अस्मान् दृष्ट्वा विधायिकां दृष्टिमादृत्य किमपि कुर्महे तर्हि एव साधीयान् स्यादयं विचारः—

'वयं सूक्तिप्रणेतारः केवलं न पुरातनाः' ॥

# कालीदर्शनम्

देवकी मेनोन्

## प्रथमोऽङ्कः

[नेपथ्ये श्लोका गीयन्ते]

1. नमामि त्रिपुरां देवीं दक्षिणेश्वरवासिनीम् ।
मूर्त्तित्रयात्मिकां कालीं सृष्टिस्थित्यन्तकारिणीम् ॥

2. नौमि कादम्बिनीं काञ्चित्ताडिदम्बरमालिनीम् ।
मेघस्तनितहुंकारां दग्धदैत्यविनाशिनीम् ॥

3. शरण्यामसितां दिव्यां व्याप्तलोकत्रयां शिवाम् ।
श्रितेषु करुणावृष्टिं भवतप्तेषु वर्षिणीम् ॥

4. वन्देऽहं करुणामूर्त्तिं रामकृष्णं जगद्गुरुम् ।
अम्बां च शारदादेवीं भुक्तिमुक्तिप्रदायिनीम् ॥

[जयरामवाटिकाग्रामे सरस्तीरम् । ग्रामवासिन्यः काश्चित् स्त्रियः घटेषु जलाहरणाय प्रविशन्ति ।]

[नेपथ्ये]

"भज गोविन्दं भज गोविन्दं
गोविन्दं भज मूढमते" ।

[ततः प्रविशति कोऽपि धार्मिकः श्लोकं गायन् ।
स्त्रियश्च गानमत्रहिताः शृण्वन्ति ॥]

---

श्रीरामकृष्णपरमहंसदेवस्य सहधर्मचारिण्याः श्रीशारदादेव्याः जीवचरित्रान्तर्भूतमेकं संभवमास्पदीकृत्य कृतमिदं प्रेक्षणकम् ।

धार्मिकः—"बालस्तावत् क्रीडासक्तः
तरुणस्तावत्तरुणीसक्तः ।
वृद्धस्तावच्चिन्तासक्तः
परे ब्रह्मणि कोऽपि न सक्तः ॥"

स्त्रीष्वेका मध्यवयस्का—हे धार्मिक, "परे ब्रह्मणि कोऽपि न सक्तः" इति यदुच्यते तत्सत्यमेव । परन्तु विद्यतेऽस्मिन् काले युवा कश्चिन्महात्मा यः परे ब्रह्मण्येव सक्तः ।

[धार्मिकः सस्मितं शिरः कम्पयन् गायन् निष्क्रामति]

स्त्रीष्वेका तरुणी—आर्ये लक्ष्मि, किं भवती श्यामसुन्दरीदेव्याः पुत्र्याः शारदायाः पतिं मनसि कृत्वा एवमाह धार्मिकम् ?

लक्ष्मीः—अथ किम् ।

तरुणी—मया तु वार्त्तान्तरं श्रुतम् ।

लक्ष्मीः—किमिव ?

[ततः प्रविशति शारदा घटमादाय पश्चाद्भागेन, स्त्रीभिरलक्षिता]

तरुणी—[सगौरवम्] श्रुतं मया स दक्षिणेश्वरे कालीमन्दिरसमीपे उन्मत्तः सन् इतस्ततो भ्रमन्नास्त इति ।

लक्ष्मीः—यद्येवं तर्हि कष्टा हि वार्त्ता । शारदा नन्वेकपुत्री वात्सल्यभाजनं च श्यामसुन्दरीदेव्याः ।

शारदा—[निभृतं श्रुत्वा सावेगम्]

शान्तं पापम्! यत्र यत्र गम्यते तत्रतत्रैषा वार्त्तैव हृदयशल्यायमाना श्रवणपथं प्रविशति । उत्कण्ठितास्मि पतिं द्रष्टुं तस्य शरीरस्थितिं तत्त्वतो ज्ञातुम् ।

[शारदा परिक्रामति । स्त्रियस्तां दृष्ट्वा संभाषणाद्विरमन्ति । शारदा घटे जलमादाय गन्तुं प्रवृत्ता । ]

लक्ष्मीः—[सस्नेहम्] वत्से, श्रीचैतन्यदेवजयन्तीदिने गंगास्नानाय कालीघट्टं गन्तुं कृतमतयो वयम् । यदीच्छसि त्वमप्यायाहि ।

शारदा—[आत्मगतम्] तुष्याम्येतया वार्त्तया । गङ्गातीरे कालीघट्टसमीपे हि दक्षिणेश्वरम् । अतः दक्षिणेश्वरं गत्वा भर्त्तारं द्रष्टुमेष एवावसरः ।

[प्रकाशम्]

अम्ब, गङ्गास्नानाय प्रस्थातुकामाहमपि । परन्तु पितरमावेद्य यथा तेनेष्यते तथा करिष्यामि ।

लक्ष्मीः—एवं कुरु ।

[सर्वे निष्क्रान्ताः]

## द्वितीयोऽङ्कः

[गङ्गास्नानाय पादचारेण गच्छद्भिस्सुहृज्जनैः सह प्रतिष्ठेते रामचन्द्रः तत्सुता शारदा च । किंतु मध्यमार्गे शारदा ज्वरपीडिता भवति । अतः रामचन्द्रः यात्रिकान् विसृज्य सुतां निकटस्थां विश्राममन्दिरं नीत्वा तत्रैकां रात्रिं वसति ।]

[विश्राममन्दिरम्]

[ततः प्रविशति रात्रौ ज्वरक्लिष्टा शारदा शयने निषण्णा]

शारदा—(आत्मगतम्) प्रियतमं द्रष्टुं त्वरते मे मनः । किंतु यावन्न शान्तिर्ज्वरस्य तावदत्रैव स्थातव्यं तातेन मया च । भर्तुः

पूर्वममागमं स्मरामि । ततः परं चत्वारि वर्षाण्यतीतानि । किमस्य स्मृतिपथाद्गलिताहम ? अथवा तादृग्गुणविशिष्टः स्वधर्मपत्नीं कथमुपेक्षत ? । आहोस्वित् (दीर्घं निःश्वस्य) "मन्दभागिन्याः पतिः नष्टबुद्धिर्जात" इति जयरामवाटिकाग्रामे प्रचरन्ती किंवदन्ती किं यथार्था भवेत् ? नष्टप्रज्ञस्यापि भर्तुस्सेवैव वरं मे । तद्युक्तं मे तत्सकाशं गत्वा शुश्रूषां कर्तुम् । (ललाटं स्पृष्ट्वा) हा ! उत्कण्ठितायाः मे ज्वरः वर्त्तत एव । किं करिष्यामि ? (अञ्जलिं कृत्वा) देवि, दयामयि, शीघ्रं मां भर्तुः समीपं प्रापय ।

[ततः प्रविशति रामचन्द्रः भाजने क्षीरमादाय]

**रामचन्द्रः**—वत्से, किं न सुप्तं त्वया ?

**शारदा**—न हि तात, ज्वरतापेन निद्रां न लभे ।

**रामचन्द्रः**—वत्से, एतत् कदुष्णं क्षीरं पिब । तर्हि निद्रां लप्स्यसे ।
[शारदा क्षीरं पीत्वा शेते । रामचन्द्रस्तां कम्बलेन आच्छादयति ।]

**रामचन्द्रः**—वत्से मा विषीद, अधुना सुलभनिद्रा भविष्यसि । निद्रया च ज्वरः शममेष्यति ।

**शारदा**—तात, श्रान्तोऽसि अध्वगमनेन । विश्रम्यतां इदानीम् ।

**रामचन्द्रः**—तथा । [इति निष्क्रान्त ]

[शारदा स्वपिति, नेपथ्ये गीयते]

"सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि ।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥

शरणागतदीनार्तपरित्राणपरायणे ।
सर्वस्यार्त्तिहरे देवि नारायणि नमोऽस्तु ते ॥"

[ततः प्रविशति शिञ्जाननूपुरा स्मेरवदना ज्योतिस्स्वरूपिणी श्रीकालीदेवी]

देवी—[शारदां प्रेक्ष्य आत्मगतम्]

5. मोदो मेऽद्य महान् जातः सैवेयं भवतारिणी ।
श्रितानां पापनिर्मुक्त्यै जाता या मानुषी भुवि ॥

[देवी मन्दं स्वपन्त्याः शारदायाः समीपे उपविश्य शीतलेन स्वपाणितलेन ज्वरतप्तं तस्या ललाटं स्पृशति]

शारदा—[स्वप्ने] कुतस्त्वम्?

देवी—दक्षिणेश्वरतः ।

शारदा—किं दक्षिणेश्वरतः? । अहमपि तत्रैव प्रस्थिता मत्पतिं द्रष्टुम्, किंतु ज्वरेणैतेन विलम्बिता ।

देवी—अलमुत्कण्ठया, शीघ्रमेव स्वस्थशरीरा भविष्यसि । दक्षिणेश्वरस्थं ते भर्त्तारमपि द्रक्ष्यसि । त्वत्कृते हि मया तेन तत्र वासः कारितः ।

शारदा—[स्वप्ने] नूनम् । महानुपकारः कृतस्त्वया । कथय, मय्येवं दयावती त्वं कासि?

देवी—ते स्वसा! [देवी तिरोभवति]

[शारदा निद्रायाः प्रबुध्य आत्मगतम्]

अये! आश्चर्यमेतत्! स्वप्ने मया ज्योतिस्स्वरूपिणी देवी काली दृष्टा । तया सह संवादोऽपि कृतः । अथवा कथं केवलः स्वप्नो भवेत्? देव्याः शीतलकरपल्लवस्पर्शेन विगतज्वरा स्वस्थशरीरा चास्मि

संवृत्ता । स्पर्शजः रोमहर्षः न मामद्यापि मुञ्चति । आनन्दसागरे मग्नेवास्मि ।

[हर्षाश्रूणि विमुच्य अञ्जलिं कृत्वा दरनिमीलितनयना ध्यायति ।]

[नेपथ्ये]

"रोगानशेषानपहंसि तुष्टा
कामानभीष्टानखिलान् ददासि ।
त्वामाश्रितानां न विपन्नराणाम्
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥"

[निष्क्रान्ता शारदा]

[नेपथ्ये]

6. जयतु जयतु देवो रामकृष्णो महात्मा
कलितिमिरनिहन्ता सर्वधर्मस्वरूपः ।
जयतु जयतु देवी शारदा सुप्रसन्ना
निरुपमगुणपूर्णा सर्वदास्मच्छरण्या ॥

# पृथ्वीराज-विजयः

## कलानाथ शास्त्री

**सूत्रधारः**—प्रायो नवशतं वर्षाणां व्यतीतम् । अद्यत्वे अजमेर इति ख्यातस्य सपादलक्षस्य पराक्रमिणा महाराजेन पृथ्वीराजेन दुर्दान्तमभूतपूर्वं च विक्रमं प्रदर्शयता भारतस्यास्योपर्याक्रमणं कृतवतां वैदेशिकानां मानसेषु सभयकम्पस्यातङ्कस्य झञ्झा प्रवाहिताऽभूत् । इन्द्रप्रस्थस्य, सपादलक्षस्य, शाकम्भर्याश्च धरणीशस्यास्य शौर्यगाथाः समस्तेऽपि भारतेऽद्यावधि गीयन्ते । देशस्यास्य दौर्भाग्यमेवाऽऽसीद् यदद्भुतविक्रमशालिनेऽस्मै पृथ्वीराजाय कान्यकुब्जेश्वरो जयचन्द्रो द्रुह्यति स्म; यतो हि परमालयुद्धे जयचन्द्रोऽनेन सन्यक्कारं पराजितोऽभूत् ।

कान्यकुब्जाधीश्वरेण स्वकीयं वैभवमैश्वर्यं च प्रख्यापयितुकामेन राजसूययज्ञस्याऽऽयोजनं कृतमासीत् । सर्वेऽन्ये राजपुत्रास्तेनामन्त्रिताः; किन्तु पृथ्वीराजाय नासौ निमन्त्रणं प्रहेतुमैच्छत् । पुरोहितेन सामन्तैश्च सहास्य सुदीर्घा मन्त्रणाऽभूत् ॥

* * * (राजसभायाः कोलाहलः समुत्तिष्ठति, शाम्यति च ।)

**श्रीकण्ठः**—कान्यकुब्जाधीश्वर, यदि विपरीतास्वपि स्थितिषु भवतो राजसूयोपक्रमः अनुमतस्तर्हि तत्र भारतवर्षस्थाः सर्वेऽपि राजपुत्रा आमन्त्रयितव्याः स्युः ।

**जयचन्द्रः**—तत्तु अहमपि जानामि श्रीकण्ठपुरोहित ! किन्तु पृथ्वीराजसदृशानां दुरात्मनामामन्त्रणेन शुभकर्मण्यस्मिन्नापशकुनं प्रागेव कर्तुमिच्छामि । अन्येभ्यः सर्वेभ्यो राजपुत्रेभ्यो मया आमन्त्रका राजकुमाराः ससम्मानं प्रेषिताः ।

---

ध्वनिनाट्यम् (Radio Play)

श्रीकण्ठः—यथा भवतामनुमतम् । किन्तु सम्राजैवानुष्ठातव्येऽस्मिन् कर्मणि यदि एकोऽपि राजपुत्रोऽवशिष्टः तर्हि यज्ञस्य साङ्गता न भवति । अत एव पृथ्वीराजोऽपि निमन्त्रयितव्य इत्यावश्यकम् ।

जयचन्द्रः—श्रीकण्ठपुरोहित, न जानाति भवानत्र ममाभिसन्धिम् । राजसूये यज्ञस्यानुषंगिकरूपेण तत्र समवेतानां सर्वेषां राजपुत्राणां सान्निध्येऽहं राजकुमार्याः संयोगितायाः स्वयंवरमप्यायोजयितुमिच्छामि । तत्र च यदि पृथ्वीराजोऽप्युपस्थितः स्यात् तर्हि तस्य तेजस्वि गात्रं, शौर्यं प्रतापं चावधार्य संयोगिता तमेव वृणुयादित्याशंकाऽस्माकम् । अन्यस्मिन्नपि राजपुत्रे तया वृते पृथ्वीराजः स्वप्रतापमदमत्तो नेदं विषहेत । अतस्तत्र विघ्नं वा विदध्यात्, तां वाऽपहर्तुमुपक्रमेत । अतः कण्टकस्य तत्र नितरामुपस्थितिरेव न स्यादित्यस्माकमाकूतम् ।

(सर्वे-साधु)

श्रीकण्ठः—महाराज, राजकुमार्याः संयोगितायाः स्वयंवरे पृथ्वीराजस्योपस्थितिर्भवतः शङ्काकारणं तर्हि किमपि तथाविधमनुष्ठीयतां येन सोऽयं तत्रोपस्थायापि विघ्नं न सम्पादयितुं प्रभवेत्, सम्पादितेऽपि विघ्ने तस्य प्रतीकारः सुशकः स्यात् ।

जयचन्द्रः—यदि श्रीकण्ठपुरोहितः सर्वानपि राजपुत्रानामन्त्रयितुमनुरोधपरस्तर्हि वयं केवलं पत्रेणैकेन यज्ञस्य सूचनामस्मै प्रहेष्यामः । तत्समकालमेव अस्माकं वीरोऽनुजो बालुकाराजः ससैन्यो दिल्लीं प्रति प्रस्थास्यते यत्रायं पृथ्वीराजस्य मानमर्दनं कृत्वा एनं निग्रहीष्यति, बलहीनं वा विधास्यति । ततश्च राजसूयमहोत्सवे, स्वयंवरे चास्यागमनमेव कठिनं भविष्यति, किं पुनर्विघ्नोत्पादनम् ?

श्रीकण्ठः—यथा महाराजः प्रसीदति ।

**जयचन्द्रः**—बालुकाराज, आदिश्यतां दशसहस्रभटानां पदातिसेना यद्दिल्लीं प्रति प्रस्थातुं सन्नद्धैः स्थातव्यम् । त्वमेव च सैन्यसंचालनं करिष्यसि ।

**बालुका०**—यदाज्ञापयति महाराजः ।

**जयचन्द्रः**—श्रीकण्ठपुरोहित, विलिख्यतां पृथ्वीराजाय राजसूययज्ञस्य आमन्त्रणपत्रम् । अद्यैव च प्रहीयतामिदम् ।

**श्रीकण्ठः**—महाराज पृथ्वीराजं प्रति निमन्त्रणमिदं कस्तत्र नेष्यति ?

**जयचन्द्रः**—कः ? अरे दिल्लीराज्यं भाग्यवशाल्लब्धवतस्तस्य लुण्टाकस्य समीपे निमन्त्रणं किमस्माक राजकुलीनः कश्चन एष्यति ? शृगालमामन्त्रयितुं कण्ठीरवो गमिष्यति ? प्रहीयतां कश्चन दूतः । (उच्चैः) कनकलतिके !

**कनकलता**—आज्ञापयतु महाराजः ।

**जयचन्द्रः**—आहूयतां राजकुमारी संयोगिता । असौ श्रीकण्ठपुरोहितेन कृताशीर्वादमंगला स्वयंवरमंगलाय गौरीमन्दिरं प्रति मया प्रेषणीया ।

**कनकलता**—महाराज, कृताभ्यङ्गा राजकुमारी स्वयमेव सर्वतोभद्रं प्रत्यागच्छति ।

**संयोगिता**—आज्ञापयतु महाराजः । पुरोहितवर्य, नमस्करोमि ।

**जयचन्द्रः**—संयोगिते ! राजसूययज्ञानुषंगत्वेनास्माभिस्तव स्वयंवरोऽपि सर्वेषां राजपुत्राणां सान्निध्ये समायोजितः । तदर्थमद्य श्रीकण्ठपुरोहितः त्वामभिनन्द्य गौरीमन्दिरं प्रति नेष्यति ।

**संयोगिता**—मदीयः स्वयंवरः ? किन्तु नाहमेतद्विजानामि । न मह्यं महाराजेन कदाचिदपि सूचितमेतत् ।

जयचन्द्रः—किन्तु किमित्येवं विलक्षा भवसि त्वम्? काऽत्र सूचनाया आवश्यकता? किं त्वं नानुमन्यसे तदिदम्? वद, प्रयच्छ उत्तरम्। किमित्येवं जोषं तिष्ठसि?

संयोगिता—न किमपि महाराज। किन्तु...किन्तु...

श्रीकण्ठः—अयि राजकुमारि! गौरवास्पदमेतत्। मंगलेऽस्मिन् मुहूर्ते नैवं विषण्णयेव स्थातव्यम्। एहि, गौरीमन्दिरं प्रति पूजायै प्रतिष्ठामहे।

कनकलता—ननु पुरोहितमहोदय! स्वयंवरचर्चया लज्जाकुला मे सखी। तन्मा एनामधिकं लज्जय। एहि राजकुमारि!

जयचन्द्रः—अहो, लज्जते संयोगिता स्वयंवरनाम्नैव। गच्छ संयोगिते, गौरीपूजां सम्पाद्य अहं प्रेक्षणीयः।

श्रीकण्ठः—एहि पुत्रि! इत इतो राजकुमारि!

कनक०—अयि संयोगिते! किमित्येवं विषण्णवदना विलक्षेव दृश्यसे? किमयं स्वयंवरस्त्वया नानुमन्यते?

संयोगिता—प्रियसखि, सर्वं जानानापि किमेवमज्ञा भवसि? येन हृदयेन प्रागेव स्वयंवरः संपादितस्तेनैव कमन्यमहं वरिष्ये?

कनक०—आः! तर्हि परमालयुद्धावसरे शिबिरसंनिवेशार्थं वीरराज-शिरोमणिं त्वं दृष्टवती सोऽद्यापि ते हृदयाङ्गणं न परित्यजति?

संयोगिता—कथं वा परित्यजेदयं हृदयांगणम्? राजकन्याया हृदयांगणे एकमेवासनं भवति कनकलते! तच्च तेनाधिष्ठितपूर्वम्।

कनक०—अयि उन्मत्तिके! केवलमिदमेव ते चिन्ताकारणम्? नात्र चिन्तनीयं किमपि। स्वयंवरेऽपि तमेव वृत्वा स्वाभिलाषं संपूरयिष्यसि, चेत् स्मरिष्यसि माम्।

संयोगिता—किन्तु कनकलते! मत्पिता तेन सह बद्धवैरो न कदापि तमामन्त्रयिष्यति स्वयंवरे।

कनक०—यदि कान्यकुब्जेश्वरः पृथ्वीराजमपि आमन्त्रयेत्तर्हि किं पारितोषिकं मह्यं दास्यसि?

संयोगिता—यदि सोऽयमामन्त्रितस्तथापि कथमहमेनं प्राप्स्यामि? अत्र सर्वेऽपि तस्य विरोधिनः। तस्य नामापि ग्रहीष्यामि चेन्महाराजो मह्यं कोपिष्यति। ततः....

कनक०—किन्तु किं पृथ्वीराजः कान्यकुब्जक्षत्रियाणां कोपाद् बिभेतीत्या-शंकसे? स खलु दुर्दान्त-पराक्रमी शतं कान्यकुब्जान् युद्धक्षेत्रे मर्दयितुं शक्नोति।

संयोगिता—किन्तु मदर्थं स कथं स्वयंवरे समागत्य...

कनक०—अये राजकुमारि, अलं चिन्तया। महाराजस्य वक्षो यावद् विशालं तावद् हृदयमपि। राजकन्यानामभिलाषपूरणं सुरक्षां च स परमं कर्तव्यं मनुते। यदि स किंचिदपि जानीयात् यद्राजकुमारी संयोगिता मयि स्निह्यति इति तर्हि स दुर्गशतान्यपि तीर्त्वा त्वां नेष्यति। किंच, को जानाति यथा तव हृदये तथा तस्यापि वक्षसि तव मूर्तिरुत्कीर्णा स्यात्। (हसति)

संयोगिता—अपेहि। किमिति दुर्लभजनानुरागं संभावयसि? किं मामुपहससि?

कनक०—राजकुमारि, नायमुपहासः। सत्यमिदम्। उपगते समये त्वमेव....

श्रीकण्ठः—राजकुमारि, प्राप्तं गौरीमन्दिरम्। तत्प्रविश पूर्वम्। 'ओं भद्रं कर्णेभिः' (घण्टा, शंखः, मन्दिरे वेदपाठध्वनिः)

* * *

सूत्रधारः—कान्यकुब्जराजकुमार्याः संयोगितायाः हृदये यः खलु प्रेमाङ्कुरः पुष्यन्नासीत्, चौहानकुलकमलिनीदिवाकरो महाराजः पृथ्वीराजः कथं तस्मादनभिज्ञस्तिष्ठेत्?

एतज्ज्ञात्वा किं तेन व्यवसितमिति प्रविश्यतां तस्य राजसभा ।

* * *

(महाराज-पृथ्वीराजस्य राजसभायाः कोलाहलः शनैः शनैरुत्तिष्ठति ।)

चारणः—सावधाना भवन्तु सभासदः । चौहानकुलकमलिनीदिवाकरो दिल्लीवल्लभो महाराजाधिराजः पृथ्वीराजः समागच्छति राजसभाम् ।

("विजयतां महाराजः" इति समवेत-ध्वनिः ।)

पृथ्वीराजः—उपविश्यतां सर्वैः । महाकवे चन्द्र! महारथ कन्ह! उच्यतां कोऽयं नवीनः समाचारः।

कन्हः—महाराज, अलौकिक-प्रतापशालिनः परमालमानमर्दकस्य तव राज्ये द्वावेव समाचारौ, अस्मत्पक्षप्रकर्षः शत्रूणामपकर्षश्च ।

पृथ्वीराजः—तत्तु सर्वं भवादृशानां सहचराणां साहाय्यस्य परिणामः । किन्तु गुप्तचरैः किमपि नवीनं वृत्तमवगतं वा?

चन्द्रवरदायी—महाराज, श्रूयते यत्कान्यकुब्जाधीश्वरो जयचन्द्रो राजसूय-यज्ञमनुष्ठातुमिच्छति । तेन सर्वत्र निमन्त्रणानि प्रहीयन्ते ।

पृथ्वी०—कान्यकुब्जराजो जयचन्द्रः! राजसूययज्ञमनुतिष्ठति! प्रांशुलभ्यं फलं वामनस्त्रोटयितुमिच्छति!! हः हः हः!!!

चन्द्र०—तदेव त्वाश्चर्यकरं महाराज! स मन्ये आत्मानं चक्रवर्तिनं मनुते ।

कन्हः—चक्रवर्ती अहमस्मि इति स्वप्नं वीक्षते, यावन्महाराजस्य प्रतापभानुः प्रखरप्रकाशं प्रेष्य नोद्बोधयत्येनम् । (सर्वे हसन्ति ।)

चन्द्र०—इदमपि श्रूयते यद्यज्ञे आमन्त्रितानां राजपुत्राणां सन्निधावेव जयचन्द्रसुतायाः संयोगितायाः स्वयंवरोऽपि समायोजयिष्यते ।

पृथ्वी०—किं संयोगितायाः स्वयंवरः? अनिन्द्यसुन्दर्यास्तस्याः स्वयंवरः? किमयं स्वयंवरः कुमार्याः संयोगिताया अप्यनुमतः?

चन्द्र०—नानुमत इत्येव तर्कयामि । यतो महाराजस्य ताम्बूलकरंकवाहिनी या कनकलता आसीत् सा कान्यकुब्जराजहर्म्यस्य अन्तः-पुराधिकृताऽस्ति । तया निभृतं सूचितमस्ति यद्राजकुमारी संयोगिता दिल्लीश्वरं विहाय नान्यं कंचन वृणुयात् इति ।

पृथ्वीराजः—(स्वगतम्) युक्तमिदम् । परमालयुद्धे कान्यकुब्जशिबिरान्निर्गच्छन्तीमेनां सुन्दरीं वीक्ष्य यथाऽहं साभिलाषोऽभूवं तथा साऽपि आवर्जितहृदया वर्तत इति दक्षिणो विधिः । (प्रकटम्) एवम्?

प्रतीहारः—महाराजो विजयताम् । महाराज, कान्यकुब्जेश्वरस्य दूतो भवद्दर्शनार्थी द्वारि तिष्ठति ।

पृथ्वी०—श्रूयतां राजपुत्रैः । कान्यकुब्जेश्वरः अस्मत्सकाशं दूतं प्रेषितवान् ।

चन्द्र०—कान्यकुब्जेश्वरः स्वयमनुपस्थाय, राजकुलीनं कंचन वा न प्रेष्य दूतं प्रेषयतीति धिगस्य गर्वम् ।

कन्हः—महाराज, नूनमयं राजसूयस्यामन्त्रणमादाय समुपतिष्ठते ।

सर्वे—यद्येवं, तर्हि न स्वीकरिष्यामो वयमामन्त्रणाम् । (कोलाहलः श्रूयते ।)

पृथ्वी०—राजपुत्राः, किमस्माभिः करणीयमिति वयं परस्तादाज्ञापयिष्यामः । सम्प्रति किमयं संदिशतीति शान्तैरस्माभिः श्रोतव्यम् । (किंचिद् विश्रम्य) प्रतीहार! प्रवेशय कान्यकुब्जराजस्य दूतम् ।

दूतः—विजयतां दिल्लीश्वरः । महाराज, कान्यकुब्जाधीश्वरो जयचन्द्रो भवन्तं सपरिकरं स्वकीये राजसूयमहायागार्थं समामन्त्रयति । पत्रमप्येष प्रेषितवान् ।

पृथ्वीराजः—महाकवे, पत्रं वाचय । (भारतसम्राजो जयचन्द्रस्य राजसूय * * * इत्यादि वाचयति ।)

चन्द्र०—महाराज, जयचन्द्रमुद्रांकितोऽयं लेखोऽस्मान् यज्ञे स्वयंवरे चोपस्थातुमामन्त्रयति ।

पृथ्वीराजः—अवगतम् । दूत! अभिवादनीयो जयचन्द्रोऽस्मद्वचसा । लेखोऽयं च प्रेष्यते प्रापणीयस्तत्र ।

दूतः—यथाऽऽज्ञापयति महाराजः ।

पृथ्वीराजः—महाकवे चन्द्र! विलिख पत्रमस्मद्वचनात् । "कान्यकुब्जाधिप, अधिगतं भवतामामन्त्रणम् । सम्राजा राजसूययागः कर्तव्य इति यत्सत्यं भवता स्वप्नायमानस्य युक्तमेवाचरितम् । किन्तु यावद्भवान् नोद्बुध्यते तावदस्माकं समागमनं राजसूययागसमायोजने न युक्तम् । समुचितेऽवसरे भवन्तं द्रक्ष्यामः" इति ।

(सर्वे-साधु साधु ।)

चन्द्र०—महाराज, लिखितो लेखः । अधुना मुद्रांकितो विधेयः ।

पृथ्वीराजः—उपनय लेखम् । दूत! समर्पणीयोऽयं लेखः कान्यकुब्जाधिपाय ।

दूतः—यदाज्ञापयति महाराजः; गच्छामि ।

प्रतीहारः—जयतु जयतु महाराजः, अस्माकं गुप्तचरः तिष्ठति ।

पृथ्वीराजः—त्वरितं प्रवेशय ।

गुप्तचरः—विजयतां महाराजः । महाराज, कान्यकुब्जेश्वरो जयचन्द्रो राजसूय-यज्ञात् पूर्वमेव अस्माकं मार्गावरोधाय ससैन्यं बालुकाराजं प्रेषितवान् ।

पृथ्वीराजः—ससैन्यम्? एतस्य अभिषेणनस्य किं वा प्रयोजनमिति किमवगतं त्वया?

गुप्तचरः—महाराज, ज्ञायते यज्जयचन्द्रः स्वयंवरे भवतः उपस्थितिं न वांछति । स आशंकितोऽस्ति यद्राजकुमारी भवन्तमेव वृणुयात् इति ।

पृथ्वीराजः—(अट्टहासः) श्रूयतां मुग्धस्यास्याशंका । यदि राजकुमारी अस्मान् वृणुते तर्हि किं बालुकाराजस्य सैन्यानि तदन्यथा कर्तुं शक्नुयुः? "क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्"?

चन्द्र०—किन्तु महाराज, यदि वयं बालुकाराजेन मार्ग एव अवरुद्धास्तर्हि तस्योन्मूलने एव भूयान् कालो व्यतिगमिष्यति । यज्ञे च वयं न सम्मिलितुं पारयिष्याम इति जयचन्द्रस्याकूतं प्रतीयते ।

पृथ्वी०—किमिदमाशंकसे महाकवे! यज्ञं वयं न गमिष्यामः इति त्वस्माभिः पूर्वमेव निश्चितम्; किन्तु यदि जयचन्द्रेण निश्चितं यद् बालुकाराजं अस्मान् दमयितुं प्रेष्य स संयोगितामन्यस्मै दास्यति इति तर्हि वयमस्य बुद्धेश्चिकित्सामवश्यं करिष्यामः ।

चन्द्र०—पूर्वं जयचन्द्रस्य सोऽयं बालुका-प्रासादश्चूर्णनीयः स्यात् । (सर्वे हसन्ति ।)

पृथ्वी०—तदनन्तरं चास्माभिः येन केनापि रूपेण संयोगितायाः स्वयंवरेऽप्युपस्थितैर्भाव्यम् ।

कन्हः—किन्तु महाराज, शत्रूणां मध्ये एवमुपस्थितिर्नितरामसुरक्षिता स्यात् ।

पृथ्वी०—तद् वयमपि जानीमो महावीर! किन्तु राजकुमारी संयोगिता साहसस्य देवी, सौन्दर्यस्य स्रोतः, स्नेहस्य च सारः । साऽस्मान् मनस्येव वृतवतीति वयं जानीमः । वयं प्राणानप्यविगणय्य तामानेष्यामः । सा जानाति यद् यो मयाऽभिलषितः, स इयान् कापुरुषो न भवति यत्संकटाद् भीतः पलायेत। वयं तस्या एनं विश्वासं सार्थकं करिष्यामः ।

चन्द्र०—साधु महाराज, साधु । उचितमेवैतद्भवतः । किन्तु तत्र सुरक्षाया व्यवस्था....

पृथ्वी०—तदर्थं महावीरस्य कन्हस्य नेतृत्वे द्विसहस्रं वाजि-सेनाः कान्यकुब्जस्य सीमायामस्मान् प्रतीक्षिष्यन्ते । स्वयंवरानन्तरं यदि कश्चनापि विघ्नः स्यात्, तर्हि वयं तत्रैव तस्य शमं करिष्यामः । स्वयंवरान्तः केवलं वयं महाकविना चन्द्रेण सह वेषपरिवर्तनं कृत्वा प्रवेक्ष्यामः । प्रतीहार, आदिश्यतामश्वपालः, पवनवेगवतां वाजिनामस्माभिः सह प्रबन्धं कुर्यात् । महारथ कन्ह, त्वमपि सैन्यान्यादिश । किंच, अस्माकमंगरक्षकसेनाऽस्मद्वचनादादिश्यतां यदैव बालुकाराजं चूर्णयितुमस्माभिः प्रस्थातव्यम् । महाकवे चन्द्र, त्वमस्माभिः सहैव गमिष्यसि । बालुकाराजं मार्गे एव चूर्णयित्वा वयं वेषं परिवृत्य स्वयंवरं प्रति प्रस्थास्यामहे । अस्माकमंगरक्षकाः स्वयंवरमण्डपाद् बहिरस्माकं दश घोटकाना-दायास्मान् प्रतीक्षिष्यन्ते ।

चन्द्र०—यदाज्ञापयति महाराजः । (किंचित्समयानन्तरम्....)

प्रतीहारः—महाराज । अश्वपालो विज्ञापयति, महाराजस्य मुख्याधिकृता दश अश्वाः सन्नद्धास्तिष्ठन्ति ।

पृथ्वी०—विजयतां भगवती चामुण्डा । वयमद्यैव प्रस्थास्यामहे ।

सर्वे—महाराजः पृथ्वीराजो विजयताम् ।

(प्रस्थानं सूचयन्तः अश्वखुरध्वनय उत्तिष्ठन्ति । ततस्तूर्यध्व-निर्युद्धं सूचयति । तदनन्तरं कियन्ति क्षणानि शान्तिः)

* * *

सूत्रधारः—कान्कुब्जेश्वरस्याभिसन्धयो महाराजं पृथ्वीराजं संयोगितायाः स्वयंवरे समुपस्थानान्नाशक्नुवन् प्रतिरोद्धुम् । बालुकाराजस्य सेना अपि वीरवरेणानेन प्रत्याहताः ।

* * *

[अश्वखुरध्वनयः प्रचलन्ति ।]

कन्हः—महाराजाधिराजः पृथ्वीराजो बालुकाराजस्य सेनाश्चूर्णीकृत्य राजकुमार्याः संयोगितायाः स्वयंवरं प्रति प्रतिष्ठत इति कियन्मंगलास्पदान्यक्षराणि ।

पृथ्वी०—नाहं लज्जयितव्यः शब्दैरेभिः । महारथ कन्ह, सर्वमिदं भवादृशानां पराक्रमिणां सहचराणां साहाय्यविलसितम् । मदीयस्याङ्गरक्षकस्य वीरसिंहस्य शौर्यमहं कैः शब्दैः प्रशंसामि ?

चन्द्र०—तत्तु सर्वं राजकुमार्या संयोगितया सह भवतो विवाहावसरे सम्पत्स्यते । अधुना तु स्वयंवर-मण्डपप्रवेशस्योपक्रमः क्रियताम् । समयः संनिकटागतः ।

पृथ्वी०—महाकवे चन्द्र! सम्यक् स्मारितं त्वया । वयं तु विजयोन्मादे विस्मृतात्मानः संजाताः । कान्यकुब्जानां सीमा निकटागताऽस्ति ।

कन्ह, त्वमत्रैव द्विसहस्रसैन्यैः सह अस्मान् प्रतीक्षिष्यसे । स्वयंवरानन्तरं यद्यावश्यकता भवेत् तर्हि वयं त्वां सूचयिष्यामः । यथा बालुकाराजस्य सेना चूर्णिता, तथा मन्ये जयचन्द्रोऽप्यस्माभिः सुरुचिरं पाठं पाठयितव्यः स्यात् ।

कन्हः—यदाज्ञापयति महाराजः । तर्हि त्वरितमेव भवता वेषपरिवर्तनं सम्पादनीयं स्यात् ।

पृथ्वी०—अधुनैवाहं महाकवेश्चन्द्रस्य परिचारको भूत्वाऽऽगच्छामि ।

कन्हः—महाकवे चन्द्र ! त्वमपि स्वयंवरावसरे पठनीयाः स्तुतिगीतीः संयोज्य रक्ष । तत्र च "महाराजः पृथ्वीराजः स्वयंवरम् आगन्तुमसमर्थ इति तेनाऽहमेव प्रेषित" इति सर्वं वाक्यपाटवेन जयचन्द्रं प्रति सूचयिष्यसि । संयोगितायै चापि कूटरूपेण सान्त्वना त्वया देया स्यात् ।

चन्द्र०—वीरवर, नात्र त्वया चिन्ता कार्या । महाकवयः सर्वेष्वेषु कौशलेषु जन्मनैव निष्णाता भवन्ति । स्तुति-गीतयश्च मया न केवलं स्वयंवर-गेया एव रचिताः, किन्तु महाराजस्य संयोगितया सह विवाहे किं किं गेयमित्यपि प्रागेव सम्यक् संयोजितं वर्तते । त्वं तु केवलं मम हस्तलाघवं पश्य । (किंचित्समयानन्तरम्·)

पृथ्वी०—दृश्यतां, महाकवेश्चन्द्रवरदायिनः परिचारको भूमिधरः समुपस्थितः ।

कन्हः—अहो आश्चर्यम् । वेषेऽस्मिन्नहमपि महाराजं न परिचेतुं शक्नोमि, दर्पान्धस्य जयचन्द्रस्य तु कथैव का ।

पृथ्वी०—तर्हि महाकवे, नास्माभिर्विलम्बितव्यम् । सन्नद्धो भव । (तारस्वरेण) वीरवराः, गम्यते अस्माभिस्त्वरितमेव पुनर्दर्शनाय ।

कन्हः—शुभाः पन्थानः सन्तु । (अश्वखुरध्वनयः । "महाराजः पृथ्वीराजो विजयताम्" इति घोषाश्चोत्तिष्ठन्ति)

*   *   *

(स्वयंवरसभाध्वनयः)

बन्दी०—विजयतां कान्यकुब्जेश्वरः । स्वयंवरमण्डपं प्रविशन्ति राजपुत्राः । कान्यकुब्जाधीश्वरो राजसूययाजी महाराजो जयचन्द्रः कृतावभृथः समागच्छति स्वयंवरमण्डपम् ।

(कोलाहलः)

जयचन्द्रः—श्रीकण्ठपुरोहित, किं सर्वेऽपि राजपुत्राः स्वयंवरमण्डपे समुपस्थिताः ?

श्रीकण्ठः—अथ किं महाराज । दिल्लीनरेशं पृथ्वीराजं मेदपाटेश्वरं समरसिंहं च विहाय सर्वेऽपि भारतीया राजपुत्रा अस्मदामन्त्रणं ससम्मानं स्वीकृत्य अत्र समवेताः । राजपुत्ररूपेण पृथ्वीराजेऽनुपस्थिते सत्यपि द्वारपालरूपेण तन्मूर्तिस्तु मण्डपाङ्गणे विद्यत एव ।

जयचन्द्रः—तर्हि आरभ्यतां स्वयंवर-मंगलम् । (सर्वे हसन्ति ।) (मंगलवाद्यध्वनयः)

चन्द्र०—(अपवार्य) महाराज पृथ्वीराज....भोः भूमिधर! स्वयंवर आरभ्यते, तत्प्रविशावः ।

पृथ्वी०—महाकवे, त्वमेव तावत् प्रविश पूर्वम् । अहं त्वत्पश्चादेव प्रवेक्ष्यामि, येन न मां कश्चन जानीयात् । प्रविश्य च स्तुतिपाठमारभस्व ।

चन्द्र०—यथाज्ञापयति वयस्यः । (तारस्वरेण) विजयतां कान्यकुब्जेश्वरः!

जयचन्द्रः—कोऽयं महाकविवेषेण मण्डपाङ्गणमुपस्थितः ?

श्रीकण्ठः—महाराज, दिल्लीश्वरस्य पृथ्वीराजस्य समः कविश्चन्द्रवरदायीव सोऽयं प्रतीयते। न खलु पृथ्वीराजोऽप्यत्रैव कुत्रचन स्यात्।

जयचन्द्रः—महाकवे चन्द्र! भवत्स्वामिना पृथ्वीराजेनास्वीकृतेऽपि स्वयंवर-निमन्त्रणे कथं भवानत्रास्मान् आगमनेन संभावितवानिति चित्रिताः स्मो वयम्।

चन्द्र०—महाराज, भवतो निमन्त्रणं पृथ्वीराजेन स्वीकृतं वा स्यान्न वा स्यात्। वयं महाकवयस्तु नूनं स्वतन्त्राः स्मः। पश्य

कवयः कूटनीतिज्ञाः कामिनो वारयोषितः।
नैकमाश्रित्य तिष्ठन्ति सर्वतन्त्रस्वतन्त्रिताः॥

जयचन्द्रः—(सहासम्) साधु महाकवे! तर्हि वयं भवतः स्वागतमाचरामः।

चन्द्र०—"श्रीमन्तं समेत्य भूरि मोदते समस्ता प्रजा
विक्रान्तं भवन्तं वीक्ष्य चन्द्रः कुरुते स्तुतिम्।
राजसूयदीक्षितो भवानपि च राज्यं प्राप्य
जाने यत्समार्ज्य कर्म कुर्वन् लभते द्युतिम्॥

पृथ्वीनाथ, किं जल्पामि नीतिसारविज्ञो भवान्
वारं वारमेतत् किन्तु यातु भवतः स्मृतिम्।
तव भुजदण्डोपर्यखण्डोदयशालिन् विभो
कान्यकुब्जराज्यभूमिखण्डो लभते द्युतिम्॥"

चारणः—स्वयंवरमण्डपमलंकुर्वाणा राजपुत्रकमनीया कान्यकुब्जराजकुमारी संयोगिता स्वयंवरमण्डपमागच्छति। कान्यकुब्जाधीश्वरेण राजसूययाजिना महाराजाधिराजेन जयचन्द्रेण घोषितं यद् यमेव राजपुत्रं राजकुमारी वृणुते स एवास्याः पाणिं ग्रहीष्यति! (कोलाहलः)

कनकलता—राजकुमारि संयोगिते, इत इतः !

पृथ्वी०—(अपवार्य) महाकवे, नूनं सुयोग्य एव स्थलेऽस्माभिरभिलाषः कृतः । सकलजगन्मण्डनमियं सुतनुः । कर्णान्तविश्रान्ते लोचने, धीरललिता गतिः । पयोधरभरानता सेयं लवलीलतेव मनसि प्रीतिमुत्पादयति ।

चन्द्र०—(अपवार्य) पश्य, राजकुमारी व्यग्रचित्तेव चकितहरिणीवन्नयनाभ्या-मन्यत्रैव किंचिन्मृगयते । मन्ये त्वमेव स सुकृती यमियं गवेषयति ।

पृथ्वी०—सदृशमेवैतस्याः । हन्त, कदाचिदियं जानीयाद् यद् यमियमन्वेषयति सोऽत्रैव संकटशतान्यविगणय्य तस्याः सौन्दर्यसुधामास्वादयितुं कालं प्रतीक्षते इति ।

श्रीकण्ठः—महाराज, कथं राजकुमारी स्वयंवरमण्डपस्थान् राजपुत्रानति-क्रान्तुकामेव दृश्यते ?

जयचन्द्रः—कनकलते ! राजकुमारीं स्वयंवरमण्डपस्थानां क्षत्रियकुमाराणां मध्ये नय ।

कनक०—राजकुमारि, महाराजः समादिशति यद् आवाभ्यां राजपुत्राणां मध्ये स्थातव्यम् ।

संयो०—कनकलते ! राजपुत्रपदप्रयोगो यमाश्रित्य शोभते स तु नात्र विलोक्यते । हन्त, कदा मम नयने चिररात्राय प्रतीक्षामिमां पारयिष्यतः ?

कनक०—(अपवार्य) राजकुमारि, मा विचिन्तय तत् । पृथ्वीराजस्य राजकविश्चन्द्रोऽत्रैवोपस्थितः । नूनं पृथ्वीराजेनापि त्वां प्रतीक्षमाणेनात्रैव भाव्यम् ।

संयो०—(व्यग्रतया) किन्तु किमहमधुना करवाणि ?

कनक०—तिष्ठ मुहूर्तं, यावदहं राजकविं चन्द्रं प्रति अक्षिसंकोचेन तदिदं सूचयामि । (तारस्वरेण) महाकवे, किमेवं तूष्णीं तिष्ठसि ? कविर्भूत्वापि स्वयंवरस्य मङ्गलावसरे तव मौनं न शोभते ।

चन्द्र०—नाहं मौनेन तिष्ठामि, अहं तु ननु चिन्तयामि ।
"सकलेष्वपि राजसु स्थितेषु त्वयि रागं जनयेन्न कापि मूर्तिः ।
तव सुन्दरि हस्तयोः स्थिता किं वरमाला विफला गमिष्यति" ॥ इति ।

कनक०—साधु महाकवे, साधु । (अपवार्य) स्वाभीष्टं राजपुत्रं वरितुं विलम्बमानां राजकुमारीं वीक्ष्य तव शङ्का स्वाभाविकी । राजकुमारि, "पृथ्वीराजस्य मूर्तिस्तव रागं जनयति चेत् तस्यामेव वरमालामर्पय" इति महाकवेराकूतं प्रतीयते ।

संयो०—मूर्तिः ? कुत्रास्ति पृथ्वीराजस्य मूर्तिः ?

कनक०—सा तव पित्रा द्वारपालस्य स्थाने स्थापिता वर्तते ।

संयो०—तर्हि आगच्छ, द्वारं प्रत्येव चलावः ।

सर्वे—अरे, राजकुमारी बहिर्गन्तुकामा ? किमिदम् ?

(कोलाहलः समुत्तिष्ठति ।)

श्रीकण्ठः—अरे ! किमिदम् ? महाराज, अनर्थः संजातः । राजकुमारी पृथ्वीराजस्य मूर्तौ वरमालां क्षिप्तवती ।

जयचन्द्रः—हा धिक् ! किमिदं शृणोमि ? संयोगिते ! किमिदं त्वयानुष्ठितम् ? कुलपांसने ! त्वमियतीमपि मर्यादां न जानासि ?

संयो०—अलं कोपेन महाराज ! मर्यादामनुसृत्यैव मया वरमाला क्षिप्ता ।

जय०—दुर्मते ! स्वयंवरे समुपस्थितान् राजकुमारान् अतिक्रम्य लुण्टाकस्यैकस्य मूर्तेर्वरणं कान्यकुब्जाधीश्वरस्य गृहे समीचीनं किम् ? छिन्धि वरमालाम् ।

(कोलाहलः)

चन्द्र०—(अपवार्य) वयस्य, कान्यकुब्जेश्वरस्य कोपाद् भीता संयोगिता वरमालां न छिन्द्यात् । त्वरितमस्या रक्षणायोपायोऽनुष्ठीयताम् ।

पृथ्वी०—महाकवे, संयोगिता कातरहृदया नास्ति । त्वं मा भैषीः । अस्मिन् व्यतिकरे सर्वं संभवति द्वाराद् बहिर्वेगशालिनो मदीया अश्वास्तिष्ठन्ति ।

जय०—किमेतत् ? सर्वे राजपुत्रा अत्रागत्य संकुलीभवन्ति । राजपुत्राः, भवद्भिः स्वासनेषु स्थातव्यम् । स्वयंवरो नाधुना सम्पन्नः । संयोगिते, निर्मर्यादाचरणे, छिन्धि वरमालाम् ।

संयो०—कान्यकुब्जेश्वर ! निर्मर्यादा अहं नास्मि, भवानस्ति । कन्या यत्र वरं स्वयं वृणुते स स्वयंवरो भवति । यदि मदिच्छामनादृत्य भवता स्वेच्छया मम विवाहः कर्तव्योऽभूत् तर्हि स्वयंवरस्य नाटकं किमर्थमायोजितम् ?

जय०—कलङ्किनि ! अस्या मूर्तेर्वरणं त्वया स्वेच्छया कृतम् ?

चन्द्र०—कान्यकुब्जेश्वर, राजकुमार्या मूर्तेर्वरणं न कृतम्; परं पराक्रमशालिनो राजशिरोमणेः पृथ्वीराजस्य वरणं कृतम् ।

जय०—पृथ्वीराजस्य ? स कुत्रास्ति ?

पृथ्वी०—पृथ्वीराजोऽत्रैवोपस्थितोऽस्ति कान्यकुब्जेश्वर ! स एव स्वयंवृतो वरः त्वदीयां दुहितरं स्वगृहं नेष्यति । राजकुमारि, त्वरितमश्वमारोह । महाकवे, अनुसर माम् ।

(अश्वखुरध्वनयः श्रूयन्ते, कलकलश्च ।)

जय०—किमहं पश्यामि? जघन्यस्यास्य एतावत् साहसम्? शार्दूलसिंह, शत्रुदमन, किं पश्यथः? त्वरितं प्रधाव्य दुष्टमेनं निगृह्याऽऽनयत। सेनापते, आदिश्यतामस्मत्सेना दुष्टस्यास्य निग्रहाय।

* * *

सूत्रधारः—इत्थं स्वकीयेन सुहृदा चन्द्रवरदायिना सह कान्यकुब्जराज-कन्यायाः संयोगितायाः स्वयंवरे छद्मवेषेण प्रविश्य पृथ्वीराजः संयोगितां नीतवान्। तस्याङ्गरक्षकसेना पृथ्वीराजं निग्रहीतुमनु-धावन्त्याः कान्यकुब्जसेनाया मानमर्दनं कर्तुमलमभूत्।

अद्यापि भारतवर्षस्येतिहासे शौर्यस्य राशिः पृथ्वीराजः, सौन्दर्यनिधानं संयोगिता चेति प्रेमियुगलं सश्रद्धं स्मर्यते।

* * *

(अश्वखुरध्वनयः प्रचलन्ति ।)

संयो०—महाराज, स्वल्पीयस्या मम कृते भवता स्वप्राणान् अपि अविगणय्य किमिदमनुष्ठितम्?

पृथ्वी०—प्रेयसि, संयोगितायास्तुलनायां प्राणाः खलु कियती मात्रा! अहं जानामि यन्मदर्थे तव हृदये यत् स्थानमस्ति तस्य प्रतिफलं पृथ्वीराजोऽस्मिन् जन्मनि न कदापि दातुं शक्ष्यति।

संयो०—आर्यपुत्र, परमालयुद्धक्षेत्रे सायंसमये शिबिरान्निष्क्रामन्तं भवन्तं वीक्ष्य मम हृदयं भवदीयमेव संवृत्तमासीत्।

पृथ्वी०—तस्मिन्नेव समये मयाऽपि त्वं वीक्षिताऽभूः। को जानाति यद् आवामद्य एवं मिलिष्यावः।

संयो०—किन्तु निरन्तरमावां दिनद्वयं चलितौ। युद्धक्षेत्रस्य न जाने का स्थितिर्भवेत्।

पृथ्वी०—नैतच्चिन्तनीयं त्वया। मदीयेषु वीरेषु मम सुमहान् विश्वासोऽस्ति। ते कान्यकुब्जानां समग्रायै अपि सेनायै अलं भविष्यन्ति। पश्य - अस्माकं राज्यस्य सीमा निकटागता। अधुनाऽऽवां संकटाद् दूरे स्वः।

संयो०—कान्यकुब्जराजपुत्र्या पितुराज्ञामुल्लंघ्य पृथ्वीराजो वृत इति न जाने जनाः किं कथयिष्यन्ति। मम हृदयं तु स्पन्दते आर्यपुत्र!

पृथ्वी०—संयोगिते, जनाः किं कथयिष्यन्तीति चिन्तयसि? अहं प्रतिजाने यद् यस्य कृते त्वया त्वत्पितुरिच्छाऽनादृता स आत्मानं ते योग्यं प्रमाणयिष्यति। इतिहासः आचन्द्रदिवाकरं स्मरिष्यति यद्राजकुमार्या संयोगितया आत्मनो हृदयस्य भावमवबुध्य एकस्तादृशः क्षत्रियो भूपस्तस्याः प्रेमाणं परिचिनोति स्म।

संयो०—मम प्राणानामाधारः मामेवमाद्रियते इति धन्याऽस्मि। आर्यपुत्र, यादृशं राजपुत्रं संयोगिना वाञ्छति स्म, तादृशमेवाद्य सा प्राप्तवती।

पृथ्वी०—संयोगिते! अस्माकं राजधानी समागता। पश्य, अस्मत्पुरवासिनः आवयोः स्वागताय हर्षोल्लासमत्ता इत एव पुरः सरन्ति।

(कोलाहलः। मङ्गलसूचको ध्वनिः। "महाराजः पृथ्वीराजो विजयताम्! महाराज्ञी संयोगिता विजयताम्!" इति समवेता ध्वनय उत्तिष्ठन्ति, शनैः शनैश्च विलीयन्ते।)

## अनुवादाः

### 'उत्तमपुरुषलक्षणम्'*

श्रीसमर्थरामदासस्वामी

अनु० - वि० के० छत्रे

यथेष्टं भोजनं कृत्वा शेषान्नमवितीर्य यः ।
प्रक्षिपत्युत्करे व्यर्थं स धर्माच्च्यवते ध्रुवम् ॥ १ ॥

तथा ज्ञानात् स्वयं तृप्तो बोधयेत् सादरं जनान् ।
नोपेक्षेत निमज्जन्तं रक्षेत् सन्तरता हि तम् ॥ २ ॥

उत्तमान् स्वयमादाय गुणान् लोकान् प्रबोधयेत् ।
अनाचर्य स्वयं बोधं कुर्वतो निष्फलं वचः ॥ ३ ॥

स्नानसन्ध्येशपूजान्ते एकाग्रमनसा जपेत् ।
ध्यायेत् प्रभुं कथाः प्रेम्णा श्रीहरेश्च निरूपयेत् ॥ ४ ॥

परार्थं क्षपयेद् देहम् उपकुर्याद् बहून् सदा ।
यत्र कुत्रापि दृष्टं च न्यूनं यत्नैः प्रपूरयेत् ॥ ५ ॥

जानीत पीडितं रुद्धं, साहाय्यं च यथाबलम् ।
तस्य कुर्याद्, उपेक्षेत न्यूनभाजं न कंचन ॥ ६ ॥

परदुःखेन दुःखी च परतोषात् सुखी भवेत् ।
संगृह्णीयात् प्राणिमात्रं मधुरस्निग्धभाषणैः ॥ ७ ॥

क्षमेतान्यायराशिं च बहूनामिष्टमाचरेत् ।
मन्वीत च परान् नित्यम् आत्मभावेन नान्यथा ॥ ८ ॥

परहृच्चाभिजानीयाद् वर्तेत च तथा सदा ।
परीक्षेत सदा लोकान् समये नैकरीतिभिः ॥ ९ ॥

---

* दासबोधे १२, १०

वक्तव्यं यदवश्यं स्याद् दातव्यं शीघ्रमुत्तरम् ।
क्रुधो वशे न गन्तव्यं क्षमित्वा स्खलितं सदा ॥ १० ॥

प्रजह्यात् सकलालस्यं निःशेषं यत्नमाचरेत् ।
कस्यापि विषये ब्रूयाद् न मात्सर्ययुतं वचः ॥ ११ ॥

प्रदद्याद् उत्तमं वस्तु वदेच्छब्दं विचार्य च ।
संसारं च वहेद् भूत्वा मानसेऽवहितः सदा ॥ १२ ॥

मृत्युं स्मरन् हरेर्भक्त्यां तिष्ठेत् सततमादरात् ।
वर्तेत च यथा मृत्वा कीर्त्या जीवेच्चिरं भुवि ॥ १३ ॥

सुष्ठु व्यवहरन् लोके, बहुषु प्रथितस्तथा ।
ऋजुः स्वभावतो न्यूनं किमहोऽनुभवेन्नरः ॥ १४ ॥

यः संपन्नो गुणैरेभिः पुरुषोऽस्ति स उत्तमः ।
संतुष्यति च तद्भक्त्या स्वान्तरे जगदीश्वरः ॥ १५ ॥

धिक्कृतोऽपि दुरुक्तैर्यो मनःशान्तिं जहाति न ।
परिवर्तयते दुष्टं, धन्यः साधुः स दुर्लभः ॥ १६ ॥

गुणोत्तमैः सुसंपन्नो ज्ञानवैराग्यमण्डितः ।
यः स भूमण्डले धन्य एकमात्रो बुधैर्मतः ॥ १७ ॥

भूरि श्राम्येत् स्वयं, मृष्येद् बहूनां च कृते भृशम् ।
आत्मानं क्षपयित्वासौ कीर्त्तिरूपो वसेद् मृतः ॥ १८ ॥

न कीर्त्तिः सुखलुब्धस्य कीर्त्तिलुब्धस्य नो सुखम् ।
अविमृश्यकृतो नास्ति समाधानं कदाचन ॥ १९ ॥

परान्तरं न विध्येच्च प्रमाद्येन्न कदाचन ।
क्षमाशीलतुलां कोऽपि नैवार्हेज्जातुचिज्जने ॥ २० ॥

कार्यं परस्य वा स्वस्य सादरं पूर्णतां नयेत् ।
सर्वथानुचितं मध्ये कार्यमारब्धमुज्झितुम् ॥ २१ ॥

सुखं मधुवचः श्रोतुम् इति साक्षात् प्रतीयते ।
परस्य सकटं तस्माद् मन्येत स्वीयवत् सदा ॥ २२ ॥

दूयते कटुभिः शब्दैर् मन इत्यनुभूयते ।
किंनिमित्तं ततो ब्रूयाद् मर्मभित् कठिनं वचः ॥ २३ ॥

स्वयं त्वङ् मर्दिता, जीवस्ततोऽतिव्यथितोऽभवत् ।
परस्य भावनास्तस्मात् स्वानुभूत्या प्रतर्कयेत् ॥ २४ ॥

परस्य दुःखदात्री या सा वाक् पावित्र्यतश्च्युता ।
समये सा च वक्तारं घातयेन् नात्र संशयः ॥ २५ ॥

अंकुरायत उग्रं च वचः सदृशमुत्तरम् ।
भाषणं कर्कशं तर्हि किंकारणमुदीरयेत् ॥ २६ ॥

पुरुषार्थश्रियः स्वस्या बहूनां साधयेत् सुखम् ।
दुःखोत्पादनमेतेषां परं स्याद् राक्षसी क्रिया ॥ २७ ॥

दंभो दर्पोऽभिमानश्च क्रोधो वाणी च निष्ठुरा ।
इत्याह ख्यातगीतायां हरिरज्ञानलक्षणम् ॥ २८ ॥

स एव पुरुषो धन्यो मण्डितो यो गुणोत्तमैः ।
ईदृशं मार्गयन्तश्च भ्रमन्ति बहवो जनाः ॥ २९ ॥

शब्दज्ञानं विनाऽऽचारं शुनो वमनवत् खलु ।
न कदापि दृशं तत्र व्यापारयति सज्जनः ॥ ३० ॥

भजन्तं मनसः श्रीशं सादरं च गुणोत्तमान् ।
स्वीकुर्वंतं सदा लोका अन्विष्यन्ति नरोत्तमम् ॥ ३१ ॥

महानुभाव ईदृक्षः संगृह्णीयाद् निजानुगान् ।
भक्तियोगाद् वशीकुर्याद् यत्नैश्च परमेश्वरम् ॥ ३२ ॥

सहसोपरते स्वस्मिन् भक्तियोगं क आचरेत् ।
अतः प्रवर्तयेल्लोकान् बहून् भक्तिपथे हरेः ॥ ३३ ॥

अस्मदीया प्रतिज्ञा यत् शिष्यात् किमपि नार्थयेत् ।
शिष्यैरुपासितव्योऽसौ देवानामधिशासकः ॥ ३४ ॥

समवायस्ततः कार्यो विधेयश्च महोत्सव ।
देवाधिदेवमन्योन्य-सहकार्यात् प्रसादयेत् ॥ ३५ ॥

समवायस्त्ववश्यश्च लक्षणद्वितयान्वितः ।
श्रोतृभिः सावधानं च चिंतनीयमिदं द्वयम् ॥ ३६ ॥

प्रबोधशक्तिरेषा च बहूनां भक्तिकारणम् ।
विजेतव्यं बहूनां च मनो भक्तिप्रवृत्तये ॥ ३७ ॥

गुणानत्रोत्तमान् प्रोक्तान् प्रमाणीकुरुते मुनिः ।
निरूप्यते प्रबोधस्य शक्तिरग्रे सलक्षणम् ॥ ३८ ॥

यथा बोधस्तथाचारः स्वयमाचर्य बोधनम् ।
यस्य, तस्यैव बोधं हि प्रमाणीकुरुते जनः ॥ ३९ ॥

मानयन्ति न तल्लोका यन्न स्वमनसाऽऽहृतम् ।
नानाप्रकृतयो लोकाः सृष्ट्यामेकस्तु बोधयन् ॥ ४० ॥

संगृह्णीयादतो लोकान् बोधयेच्च जयन् जयन् ।
प्रापयेच्च हरेः पादं विवेकेन शनैः शनैः ॥ ४१ ॥

विवेककार्याण्येतानि विवेकी साधयेत् क्रमात् ।
इतरे कलहायन्ते वराका हा! भ्रमाहताः ॥ ४२ ॥

कलिकृद् बहुभिः सार्धं एकः स्वीकरणोचितः ।
तस्माद् बहून् सदा साधुः प्रीणयेत् समुपादिशन् ॥ ४३ ॥

# विद्यापतेर्गीतानि *

अनु० डा० शशिनाथ झा

## शक्तिवन्दना

जय जय भैरवि ! असुरभयङ्करि !
पशुपति-भामिनि माये !
सुलभ-सुमतिवरं देहि गोस्वामिनि !
अनुगत-गतिस्तव पादौ ॥

अहर्निशं शवासन-शोभित-चरणौ
चन्द्रमणिश्चूडायाम् ।
कतिचिद् दैत्यान् निहत्य मुखसात्कृत्य
कुत्रापि उद्गीर्य कृता गण्डूषाः ॥

श्यामलो वर्णः, नयने अनुरञ्जिते
जलद-योगात् फुल्लमुत्पलम् ।
कट-कट-विकटम् ओष्ठपुटपाटलं
लग्नफेनमुत्थित-बुद्बुदम् ॥

घन-घन-घननं किङ्किणी बहुमुखरिता
हनहनं करोति तव कर्त्तरी ।
'विद्यापति'कविस्तव पदसेवकः
तं पुत्रं मा विस्मर मात. ! ॥

* *

## नायिकावर्णनम्

पीनौ पयोधरौ, दुर्बलं गात्रम्,
मेरौ उत्पन्ना कनकलता ॥
हे कृष्ण, हे कृष्ण ! भृशं प्रार्थ्यसे,
अत्यपूर्वा दृष्टा राधा ॥

---

* मैथिलीकवितायाश्छायानुवादः

मुखं मनोहरम् अधरो रक्तः ।
फुल्लिता माधुरी कमलैः सह ॥

लोचनयुगलं भृङ्गाकारम् ।
मधुमत्तं सत् नोत्पतने क्षमम् ॥

भ्रुवोश्चर्चां पृच्छ न हि ।
मदनेन कृष्यं कज्जल-धनुः ॥

भणति 'विद्यापति.' दूत्याः वचनम् ।
श्रुत्वा कृष्णः कृतवान् गमनम् ॥

* * *

सुधामुखि ! केन विधिना
त्वं निर्मिता बाला ।
अपूर्वरूपा मनोभवमङ्गला
त्रिभुवन-विजयिनी माला ॥

सुन्दर-वदने चारु लोचन-युगं
कज्जल-रञ्जितं भवति ।
कनक-कमले कृष्ण-भुजङ्गया सह
खञ्जन-युगलं खेलति ॥

नाभि-विवरतो विकसति रोमावलि-
भुजगी निश्वास-पिपासिता ।
नासा-खगपति-चञ्चु-भ्रमात् सा
कुच-गिरि-सन्धौ प्रच्छन्ना ॥

त्रयो बाणाः मदनेन त्यक्ताः त्रिषु भुवनेषु
अवशिष्टौ यौ बाणौ ।
विधिरतिदारुणो हन्ति रसिकजनं
नयनयोस्तव न्यस्तौ तौ ॥

भणति 'विद्यापतिः', शृणु वरयौवने !
इमं रसं कोऽप्येव जानाति ।
राजा शिवसिंहो रूपनारायणः
'लखिमा'देव्या रमणः ॥

## महेशवाणी

'अद्य नाथ ! एकं व्रतं, महासुखमासादय ।
त्वं शिव ! धारय नटवेषं, ढक्कां च वादय' ॥

'त्वं गौरि ! कथयसि नर्तितुं, कथमहं नर्तिष्यामि ।
चतस्रः चिन्ताः मम भवन्ति, कथमुद्धरिष्यामि' ॥

'अमृतं च्युतं भूमौ पतिष्यति, व्याघ्राम्बरं जागरिष्यति ।
भविष्यति व्याघ्र-चर्म व्याघ्रो वृषभं च खादिष्यति ॥

शिरसः स्रंसिष्यते सर्पः, भूमौ संलुठिष्यति ।
कार्त्तिक-पोषितो मयूरः तं बलात् खादिष्यति ॥

जटाया उत्फालिता गङ्गा भूमिं प्लावयिष्यति ।
तस्याः सहस्रप्रवाहान् को नाम निवारयिष्यति ॥

मुण्डमाल्यं त्रुटित्वा पतिष्यति, श्मशानी जागरिष्यति ।
त्वं गौरि ! यास्यसि पलायिता, नृत्यं को द्रक्ष्यति' ॥

भणति 'विद्यापतिः'-'अगायत् प्रगीय चाश्रावयत् ।
संरक्ष्य गौर्या मानं चतस्रोऽपि न्यवारयत् ॥

# अनिरुद्धो बन्धनस्थः

वल्लत्तोल् नारायण मेनोन

अनु० डा. के. राघवन् पिळ्ळ

मायारणे भटजनानधिकान् नियुज्य
व्यायामतीव्रमनिरुद्धमथो विजित्य ।
धीमान् स बाणसचिवो गतवान् उषायाः
धामाप्य तद्वचनमाप्तसखीमुखोत्थम् ॥ १ ॥

जाज्वल्यमाननयनः पलितप्ररूढ-
वक्षःप्रदेशपरिलम्बिमुखस्थरोमा ।
संजातभूरिवलियुक्तविशालफालः
प्राशोभतैष मुसलोपमबाहुवीर्यः ॥ २ ॥

प्रालेयशैलरुचिरस्वकरम्यहर्म्य-
श्रीयुक्तचारुतरसन्मणिवेदिकायाम् ।
तां भूरिदुःखवशगां भृशमन्दचेष्टां
मन्त्री ददर्श रचितामिव चित्रपत्रे ॥ ३ ॥

आलस्यतान्तमवनाम्य निजास्यमल्पं
धृत्वा च पल्लवकरेण निजं निटालम् ।
पीठे शिलारचितशीतलशुभ्रशोभे
तन्व्यासिता तदवलम्ब्य मनोज्ञरूपा ॥ ४ ॥

पुष्पास्त्रकेतुसदृशास्सुसमृद्धकेशाः
बन्धान्मनोज्ञतालमे गलिताः पतन्तः ।
पश्चाद् विभान्ति बहुकीर्णतया कुमार्याः
स्वच्छे शरन्नभसि नीरजजाततुल्यम् ॥ ५ ॥

---

केरलभाषारचितायाः मूलकृतेः वृत्तानुवृत्तसंस्कृताविवर्तनम् ।

यद्यप्यसक्तहृदया सुदती स्वभूषा-
स्वेताः स्वभव्यनिलये प्रणयादिवास्याः ।
श्रीमत्तनौ तत इतो गलितप्रशोभाः
भूषाः स्थिताः कतिचनोत्तमरम्यताढ्याः ॥ ६ ॥

पीनस्तनीधृतमनोज्ञकुचोत्तरीयं
दूनत्वशंस्यलघुनि श्वसितैर्विलोलम् ।
स्थानाल्लघु च्युतमतीव तदार्द्रमस्रै-
रूनप्रभं च बहुशोच्यदशामवापत् ॥ ७ ॥

आलोक्य तामधिगतामतिमात्रमाधिं
स्वाश्रुप्रसिक्तनयनानि करेण मृष्ट्वा ।
तां हैमदण्डभरितैः कमनीयतालैः
सवीजयन्ति सुखदैः स्म तदीयसख्यः ॥ ८ ॥

कुम्भाण्ड एष कृतकेतरवत्सलात्मा
स्तब्धाभ एव कतिचिन्निमिषान् स तस्थौ ।
स्वीयप्रभोर्दुहितुरुग्रविषादयोग
भूयो निरीक्ष्य पुरतो मथितान्तरङ्गः ॥ ९ ॥

पश्यात्र भूपसचिवं जनकं ममेति
स्पष्टस्वराऽवददमूमथ चित्रलेखा ।
कन्या च तन्निमिषजागरितेव पीठा-
दुत्थाय पूतचरितं सदृशं तमार्चत् ॥ १० ॥

तत्कान्तरागविवशा सचिवोत्तमं सा
वक्तुं तदाभ्यलषदत्यधिकं हि वस्तु ।
किन्तूत्कटेन निजभावभरेण तन्वी
सन्त्यक्तुमेव न शशाक दृढं स्वमौनम् ॥ ११ ॥

चिन्ताशतक्षुभितया बलिवंशभाग्य-
संजातराजसुतया सचिवोत्तमोऽयम् ।
किं वाद्य वक्ष्यत इति त्वरयात्तशङ्काः
सख्योऽनिमेषनयनाः निकटे स्थितास्ताः ॥ १२ ॥

व्यामर्दिता बहुविधैरभिभूतचित्तै-
र्भावैर्मुहुर्मुहुरसौ नरपालबाला ।
प्रेमप्रसिक्तहृदयं निजताततुल्यं
ब्रूयात् किमेनमतिपूज्यममात्यवर्यम् ॥ १३ ॥

हृत्स्पन्दघोषपटहध्वनियुक्तयुद्धे
मन्युव्यथेऽशमयतामधिकान् त्रपाद्यान् ।
किञ्चिद् यदा सुचरिता वनिता तदा सा
निःश्वासमेकमथ दीर्घतरं मुमोच ॥ १४ ॥

अग्निस्फुलिङ्गसमदुस्सहतीव्रतापैः
अक्षिप्रसारितनिजेक्षणशल्यजालैः ।
दग्ध्वेव तं सचिवमुत्कटमन्युवेगा
वाचं दृढस्वरमुवाच मनस्विनी सा ॥ १५ ॥

हा! जन्यसीम्नि बहुयोधगणान् युवा य-
स्तेजोबलैकशरणो विममाथ बाढम् ।
तं योऽजयत् कपटयुद्धनयेन तस्मै
दैत्याधिराजसचिवाय नमो नमोऽस्तु ॥ १६ ॥

मुक्त्वाऽपराधिजनमन्यमपापमेव
स्वेच्छानुसारमथ दण्डयसीति का ते ।
नीतिः? भवान् खलु निवर्त्तयति स्म बाढं
स्वीयान् जनान् सकलपापपथानुसारात् ॥ १७ ॥

स्वीकृत्य मत्क्षणमिहागमदार्यपुत्रो
नो मां प्रधृष्टहृदयो रभसापहर्तुम् ।
एकत्र पापशतवासगृहं परस्मिन्
दण्डश्च कोऽयमुचितो बलिवंशधर्मः ॥ १८ ॥

अस्त्वेव पापकलुषः स मनोज्ञशीलः
मत्पापभारपरिशान्तिरतः कथं स्यात् ।
हृच्चापलाद् अनयवर्त्मनि योऽचरत् तं
त्यक्त्वानुगे कथमहो क्रियते हि दण्डः ॥ १९ ॥

काराधिवासविधिना स हि दण्डितो यद्
घोरापराधसहिताहमतोऽस्मि वध्या ।
वीरावरोधपदसंश्रयणेन धन्या
मृत्युं ह्यमर्त्य-कृतकृत्यधिया वरिष्ये ॥ २० ॥

दण्ड्या किमर्थमथवा पुनरप्यहं स्यां
हन्ताहतापि हतजीवितमुद्वहामि ।
साऽत्यन्तविह्वलितकण्ठतयाथ किञ्चिद्
वक्तुं शशाक न, रुरोद च बालिकेव ॥ २१ ॥

कारागृहं क खलु नीचजनैकयुक्तं
कासौ तदात्मदयितस्सुखजीविताहः ।
आकस्मिकागतकठोरविपद्गतं तं
स्मृत्वा बतार्द्रहृदया विललाप बाढम् ॥ २२ ॥

दुःखाब्धिगां कथमिमामिह पारयामी-
त्युत्कण्ठितो मुषितवाक् सचिवस्तदाऽभूत् ।
कन्या च नेत्रसलिलापगमादथाल्पां
लब्ध्वार्तिशान्तिमथ वाचमिमां बभाषे ॥ २३ ॥

स्वेच्छावशादहमियं पुरुषं वृणोमी-
त्येतत् कथं मम पितुह्यपमानदं स्यात् ।
कस्याहितं जनयितुर्निजदारिकायाः
प्रख्यातवीरदयितापदलाभभाग्यम् ॥ २४ ॥

वीराग्रिमस्स हि महान् कुलजो युवेति
स्वेनैव वीरचरितेन सुसाधितोऽर्थः ।
का नाधिगन्तुमभिवाञ्छति दास्यमेतत्
कृष्णात्मजात्मजपदे नृपतेस्तनूजा ॥ २५ ॥

आहाथ तप्ततरनिःश्वसितः स मन्त्री
'श्रीरस्तु ते नृपसुते शुचमाप्नुयान्नो ।
तीव्रानुरागतटिनीसुगमप्रवाहं
दैवं न विघ्नरहितं सहते कदाचित् ॥ २६ ॥

रागोऽयमस्ति महितो भवदीयहृत्स्थो
रूढो रहस्यपरमस्ति तथापि गण्यम् ।
हे ! कार्यवेदिनि ! नृपो मनुते यशस्वी
तातस्तवाग्रिमतया जनदुष्प्रवादम् ॥ २७ ॥

शान्तिं प्रतीच्छतु पितुर्बहुकोपवह्नेः
भूपं करोमि च तवाद्य मनोऽनुकूलम् ।
प्राप्नोतु सौख्यम्, अयि भो कुरु चित्रलेखे !
सख्याः प्रमोदमिति गन्तुमथोदतिष्ठत् ॥ २८ ॥

अक्ष्णोर्भृशं कलुषयोररुणे कपोले
बाष्पान् प्रफुल्लसुमलग्नहिमाम्बुतुल्यान् ।
सा वर्षयन्त्यविरलान् पुनरेवमूचे
तं मन्त्रिवर्यमथ दुस्सहदुःखभारा ॥ २९ ॥

इच्छास्ति चेत् कदनवारिधिमज्जितां मां
त्रातुं जनस्य मम, देयमिदं वरं मे ।
एकाकिनं प्रियतमं सकृदीक्षितुं मे
कारागृहं भवतु गन्तुमिहाभ्यनुज्ञा ॥ ३० ॥

श्रुत्वार्थनामनुचितां सहसैव मन्त्री
विद्युत्प्रपात इव संभ्रमचालितोऽभूत् ।
किं योजयिष्यति नृपस्य सुतां कृतागाः
प्राप्तेन तेन निगडं नृपतेर्निदेशात् ॥ ३१ ॥

तस्मिन्नमात्यहृदये नृपभक्तिभारः
प्रेमाधिकश्च नृपतेः प्रियकन्यकायाम् ।
अन्योन्यमर्दनरणं दधतुः, रणेऽस्मिन्
भाग्यादभूत् प्रणय एव जयाभिषिक्तः ॥ ३२ ॥

प्रज्ञास्थिरे निजमुखे सकलान् हृदिस्थान्
भावान् समुज्ज्वलतरे सुदृढं निरुध्य ।
संप्रत्युषापतिरुवास स बन्धभूमौ
पद्मासनस्थ इव सङ्घटितांघ्रिबन्धः ॥ ३३ ॥

यद्वीरदेहहरिचन्दनमस्य वक्ष-
स्तेनोषितं विपुलमस्रभरेण बाढम् ।
तस्याप्यधो मुसलबाहुयुगं मनोज्ञं
धृत्वा व्यतीत्य हरिसूनुसुतो बभासे ॥ ३४ ॥

स्वीये पितामहगृहे न्यवसद् यथा सः
पूर्वं सुखं निखिलभूतिविशिष्टपुयोम् ।
तद्वत् प्रवासनिलये पुरुशान्तचित्त-
स्तस्थौ युवा प्रकटपौरुषधैर्यशाली ॥ ३५ ॥

चिल्लीलताविलसितं विशदाढ्यफालं
धीरोज्ज्वलाक्षियुगलं च मनोऽभिरामम् ।
श्मश्रुप्ररोहकमनीयतरे तदास्ये
तारुण्यकान्तिरचनां रुचिरामकुर्वन् ॥ ३६ ॥

अस्याभ्रनीलरुचिरायतकेशपाशः
स्कन्धे गलन् सुरुचिरे वृषभोपमीये ।
आभाद् रणोत्थितपरागगणाविलत्वात्
काषायकर्कशतरः परिणामितोऽपि ॥ ३७ ॥

तं द्रष्टुमात्मसचिवं चलति स्म कन्या
संप्राप्य तत्सचिवमौनमयाभ्यनुज्ञाम् ।
संभ्रान्तरक्षिजनशीघ्रविपाटितेन
द्वारेण बन्धनगृहं प्रविवेश तन्वी ॥ ३८ ॥

अग्रे ददर्श तरुणी रुचिरं युवानं
प्रक्षीणदीपमिव मृद्घटसन्निविष्टम् ।
उग्रश्मशान इव वर्धितमाम्रपोतं
धूमप्रतिष्ठितमिवोत्तमपुष्पराजम् ॥ ३९ ॥

सावस्करं गतमिवातिपवित्रसाल-
ग्रामं, ग्रहच्युतमिवैहिकभागधेयम् ।
पङ्कावगाढमिव दन्तिसुतं, सिताभं
शङ्कावलीढमिव मर्त्ययशोभरं च ॥ ४० ॥

तत्रागतां सरभसं दयितामकाण्डे
मक्षिप्रकाण्डबहुकृष्णविकीर्णकेशाम् ।
पश्यन् स बन्धनिलयेऽल्पतरप्रकाशे
तस्थौ युवा हृदि विवर्धितकम्पनस्सन् ॥ ४१ ॥

उत्थातुमारभत तां महीतां स्वकान्तां
स्वीकर्तुमत्र निजबन्धगृहे स यावत् ।
तावत् तदङ्कतलमाविलवीरपट्टे-
नाच्छादितं नृपसुता त्वरयालिलिंग ॥ ४२ ॥

उत्थाय शीघ्रमथ तां प्रणयी स्वकान्तां
गाढं समाश्लिषदतिप्रणयादरेण ।
संचुम्ब्य तद्गलितकुन्तलवत्कपोले
प्रामार्जयच्च बहुलाश्रुझरीं करेण ॥ ४३ ॥

घोरायुधव्रणितकान्तकलेबरं सा
हस्तेन सूनमृदुना सदयं स्पृशन्ती ।
श्रीराजवंशदुहितृस्पृहणीयवीर-
दारत्वलाभमपि नोत्सवदं हि मेने ॥ ४४ ॥

दारानवेक्ष्य पुरुदैन्यगतानपूर्वो
धीरस्य तस्य समजायत धैर्यलोपः ।
हृत्स्पन्दितं द्रुतमभूत्; विववार नासा;
घर्मोऽभवद् वपुषि, नेत्रजलं तथोष्णम् ॥ ४५ ॥

प्रोवाच गद्गदवचास्स शनैः कुमारः
किं लंघयेत् पितृनिदेशमये! सुकन्या ।
नारीमणे! कथमहो! तव संगमोऽयं
युक्तोऽपराधिपुरुषेण च बन्धगेन ॥ ४६ ॥

आगस्त्यहं सुतनु! संप्रति यत् त्वदीयं
सौगन्धिकप्रसवसौरभपादयुग्मम् ।
भूगर्भकर्कशभुवाविह यातुमेवं
हेतुर्बभूव, कठिनो मम सोऽपराधः ॥ ४७ ॥

प्रेम्णा प्रियां परिणयन् पुरुषोऽधनोऽपि
स्वीयं गृहं नयति, पालयति स्वकान्ताम् ।
मां मन्दभाग्यमवृणोरिति बन्धगेहं
जातं तवाद्य निजबन्धुजनस्य गेहम् ॥ ४८ ॥

देवारिवीरभटशस्त्रशतेन जातां
पीडामवैमि निखिलामधुनैव सम्यक् ।
हा ! दुःखतप्तहृदया कृपणागमत् सा
कारागृहं मम वधूरिह कृष्णपौत्री ॥ ४९ ॥

शोकं शुभे ! भजतु नो यदयं निरुद्धो
जातोऽनिरुद्ध इति शोच्यदशामवेक्ष्य ।
दैवे निरुध्यति भवेन्निमिषार्धमात्रे
देवः कृमिर्जलनिधिश्च मरुप्रदेशः ॥ ५० ॥

किन्त्वस्ति चेद् भुवनसाध्वि ! करे मदीये
त्वत्प्रेमरूपमहितायुधतल्लजोऽयम् ।
नाहं बिभेम्युपगतादपि सर्वकष्टात्
नाशाय मे समुदितादुपलब्धधैर्यः ॥ ५१ ॥

अद्य त्वमर्हसि निजं गृहमाशु गन्तुं
दाक्षिण्यपूर्वमियमस्ति ममार्थनैका ।
भद्रे ! क्व तातयशसामपमानदात्री
पुत्री, क्व पापरहिता कुलजा वधूटी ॥ ५२ ॥

श्रुत्वाथ साधुवचनं दयितस्य कान्ता
तस्थौ कृताञ्जलिरुपेक्ष्य तदङ्कदेशम् ।
प्रोवाच वाचमियमार्द्रतया सुवाचा
हृत्कम्पितानि विनियम्य यथानुकूलम् ॥ ५३ ॥

मन्नाथ! पापरहितं चपला भवन्तं
पृथ्वीममङ्गलदशामनयं तथापि ।
मत्पापभारमखिलं क्षमतां दयालो!
मह्यं ददातु च भवान् पदनित्यदास्यम् ॥ ५४ ॥

जीवाधिनायक! भवान् व्रणितातुराङ्गो
वासोऽपि ते मलिनबन्धगृहान्तरेऽत्र ।
विस्मृत्य वस्त्विदमहो भवतः सकाशात्
शक्नोति गन्तुमिह गेहमियं न दासी ॥ ५५ ॥

गच्छामि कुत्र मम नायक! शर्म लब्धुं
त्यक्त्वा त्वदंघ्रियुगलं मम निन्यलक्ष्यम् ।
अन्धं त्विदं सुखकरं तव बन्धगेहं
मे, नो मदीयसुपरिष्कृतरम्यगेहम् ॥ ५६ ॥

क्रुद्धो भविष्यति पितेति कथाऽवगण्या
किं स्त्री स्वभर्तृसहचारविमोचनार्हा ।
हा मेऽत्र दुर्गतिरियं यदहो! भवांश्च
मां द्वेष्टि यः क्षितितले परदैवतं मे ॥ ५७ ॥

स्फीताक्षियुग्मगलिताश्रुझरीं विमुच्य
तन्वी रुरोद वचसां गणमेवमुक्त्वा ।
लम्बालकं निखिलदुःखभरादिवास्याः
नम्रं बभूव वदनाब्जमतीव तान्तम् ॥ ५८ ॥

इष्टार्पिताञ्जलिमथात्मकरे गृहीत्वा
सञ्चुम्ब्य तं व्यथितहृद् बहुधा कुमारः ।
आलिङ्ग्य तर्जितसुमं तनुमेवमूचे
वाचं गिरा प्रणयविक्लबया तदानीम् ॥ ५९ ॥

प्राणप्रिये रुदिहि मा! रिपुमुक्तनाना-
बाणान् प्रसोढुमलमस्ति ममात्र वक्षः ।
किन्त्वश्रुबिन्दुमपि बाणसुताक्षिजन्यं
सोढुं क्षमो भवति नैकमिहानुरुद्धः ॥ ६० ॥

आगामिकालिकसुमङ्गलरूपदीप-
च्छाया विपद् भवति, मा स्म गमस्त्वमार्तिम् ।
हे! पक्ष्मलाक्षि! सदनं प्रतिगच्छ! मुग्धीं
शोकेन मा तनुमिमं परितापयेत्थम् ॥ ६१ ॥

खिन्नोऽस्मि भूरिसमराहितदेहसादात्
किञ्चिन्न मेऽस्ति कठिनामयदाऽतिपीडा ।
नाहं प्रिये क्षततनुर्न च रुग्णचित्त-
स्तस्मादहेतुकमये त्यज दुःखमेतत् ॥ ६२ ॥

भाग्याद्धि मे तव पिता युधि रुद्धयत्नः
प्रायोजयत् कपटयुद्धमिमं विजेतुम् ।
उग्राऽभविष्यदयि ते हि दशाऽब्जनेत्रे!
मद्धेतुका जनकदुःखगतिस्तु नो चेत् ॥ ६३ ॥

क्षेमप्रणाशशुभबाधककीटबाधां
त्यक्त्वाऽऽवयोः प्रणय एष तरुस्त्वशेषाम् ।
हे! मञ्जुलाङ्गि! भविता सफलः क्रमेण
यं स्वान्तरङ्गभुवि नौ परिवर्धयावः ॥ ६४ ॥

सत्यं वदामि पुरुखिन्नमना भवामि
त्वद्वासमेतमिह बन्धगृहे निरीक्ष्य ।
मत्प्रेयसि! द्रुतमिमं त्यज बन्धगेहं
न स्त्रीजनोचितगृहं खलु बन्दिवासः ॥ ६५ ॥

तन्वी तदा वचनमेतदुवाच शङ्का-
युक्तं प्रभो! यदि भवानभिवाञ्छतीत्थम् ।
भावत्कपादकिरणाननुसृत्य कारा-
गाराद् ममास्त्विह बहिर्गतिरार्द्रचित्त! ॥ ६६ ॥

कन्यापराधकुपितः परमन्धचित्त-
स्तातो ममाद्य, मनुतां न तदीयमागः ।
कोपः कथं समुचितोऽनुचितः परस्मिन्
धीराग्रणीर्मम हितं न भवान् त्यजेद्धि ॥ ६७ ॥

एवं नृपस्य सुतया कथितः कथञ्चिद्
भावान्तरं कथितवान् यदुसूनुराप्तः ।
हा! बन्धनाद् रहसि निस्तरितुं भयेन
चोरः किमेष दयितस्तव साधुशीले ॥ ६८ ॥

स्फारानुतापगुरुतावशतां गता त्वं
धीराङ्गनापदमये त्यज तन्न जातु ।
कारागृहान्मम विमोचनमाशु कर्तुं
धीरस्समेष्यति नवस्तव बन्धुवर्गः ॥ ६९ ॥

जामातृवंशचरितं तव मान्यतातं
सम्यग् यथाविधि महद्धृदि बोधयित्वा ।
नेष्यन्ति ते यदुपुरीं जनकस्य गेहात्
मान्या जयश्रियमिव प्रणयादराहाम् ॥ ७० ॥

कान्ताङ्गि ! दैवकरुणाजनितानुराग-
स्तोमप्रणाशमिह नो सहतेऽखिलेशः ।
त्यक्त्वा तवार्त्तिमथ गच्छ पितुर्गृहं त्वं
नो लङ्घयेत् पितृनिदेशमये वरस्त्री ॥ ७१ ॥

बहुविधवचनैस्तां सान्त्वयन् बन्धगेह-
प्रतिरणितरवैस्तत्प्रीतिवादैरिवाप्तैः ।
मुहुरपि परिपूर्णप्रेमसौभाग्ययत्नै-
रलसगमनरम्यां कामुकः प्रैषयत् ताम् ॥ ७२ ॥

## देशचरितानि

श्रीरङ्गं श्रीनिवास राव

अनु० बोम्मकण्टि श्रीनिवासार्यः

कस्यापि देशस्य चरित्रपाठे
कस्तत्र दृष्टो वद गर्वहेतुः ।
नृणां चरित्रं खलु सर्वमेतत्
प्रायः परेषां परिपीडनं हि ॥ १ ॥

नृणां चरित्रं खलु सर्वमेतत्
परस्परस्वापहृतेः प्रयत्नः ।
नृणां चरित्रं खलु सर्वमेतत्
संग्रामरङ्गोत्थितरक्तसिक्तम् ॥ २ ॥

एतत्तु बीभत्सरसप्रधानं
पिशाचरौद्रोद्धतताण्डवाभम् ।
नृणां चरित्रं खलु सर्वमेतत्
दीनप्रजावर्गविमर्दनं हि ॥ ३ ॥

बलातिरिक्ताः बलहीनजाति
चकार निष्कारणमात्मदासीम् ।
भूत्वा धरेशा नरघातुकास्ते
ख्याता बभूवुर्धरणीचरित्रे ॥ ४ ॥

---

* 'श्रीश्री' इति प्रसिद्धस्य आधुनिक-तेलुगुकवेः तेलुगुखण्डकाव्यस्यानुवादः ।

किंचित् स्थलं यत्र रणोग्ररङ्गो
न लभ्यमन्विष्टमपीह भूमौ ।
रक्तैः प्रसिक्तं हि गतं समस्तं
न चेत् कवोष्णैर्जनबाष्पजालैः ॥ ५ ॥

निर्वापिता नैककुटुम्बवर्गाः
मृताश्च ते ते जनताकदम्बाः ।
हाहाकृतिश्चाप्यसहायकानां
श्रवःपदं हन्ति चरित्रमार्गे ॥ ६ ॥

वैषम्यधीः स्वार्थपरायणत्वं
कौटिल्यमीर्ष्या पृथुवैरभावः ।
नामान्तरेणात्र विवर्त्य मायी
निर्णीतवान् लोकचरित्रमार्गम् ॥ ७ ॥

अस्त्वेष 'जेंघिज्' खलधीः 'तमर्लेन्'
'घोरी' च 'घज्नी' ह्यथवा 'नदिर्षा' ।
'सिकन्दरो'ऽस्त्वन्यतरोऽस्तु कश्चित्
सर्वोऽपि चैषां खलु घोरहन्ता ॥ ८ ॥

'वैकिंग्'-जनैः श्वेततराश्च 'हूणैः'
'सिथीय'-जात्यैरथ 'पारसीकैः' ।
'पिण्डारि'-षण्डैरपि 'थग्'-समूहैः
प्रकल्पितः कालिकखड्गसेतुः ॥ ९ ॥

अज्ञानघोरान्ध्ययुगे तदानीं
क्षुधाभिभूतो रुषया परीतः ।
अज्ञाततीव्रेण कयापि शक्त्या
प्रवर्त्यते स्माखिलमर्त्यलोकः ॥ १० ॥

सर्वं स्वकीया प्रतिभेति मत्वा
आत्मान एवेति भुवोऽधिनाथाः ।
साम्राज्यसंस्थापनमारभन्त
कृत्वा नृपाः कृत्रिमशासनानि ॥ ११ ॥

सर्वाश्च साम्राज्यविभूतयस्ताः
पेकाल्प-सौधा* इव पातिता हि ।
अन्योन्यसङ्घर्षितशक्तिजातं
नृणां चरित्रं खलु सर्वमेतत ॥ १२ ॥

चिराय या मानववञ्चनाऽऽसीद्
दौष्ट्यं च यत् शक्तिमतां धरित्र्याम् ।
या कूटनीतिर्धनिनाममोघा
न त्वद्य शक्या, दिवसा गतास्ते ॥ १३ ॥

एको नरोऽन्येन नरेण यस्याम्
एका च जाति· प्रबलान्यजात्या ।
प्रपीडिता तादृशसङ्घनीति
न त्वद्य शक्या, दिवसा गतास्ते ॥ १४ ॥

चैनीय-'रिक्षा'-प्रविचालको वा
चेकु-देशवर्ती खनिकार्मिको वा ।
ऐर्लण्ड-नौकाश्रय कामिको वा
सर्वे त आर्ता परपीडनेन ॥ १५ ॥

---

* Houses of cards

'जूलू' च 'नीग्रो' च तथा 'हुटेंटाट्'
खण्डान्तरस्था विविधाल्पजात्याः ।
उद्घोषयेयुः पुनरेककण्ठं
नरेतिहासस्य यथार्थतत्त्वम ॥ १६ ॥

यत्सङ्गरो यत्र यतः प्रवृत्त.
यद्राज्यमाभाच्च कियच्च कालम् ।
वाराश्च पत्राणि पुरातनानि
भ्रातर्न चैतानि चरित्रसार· ॥ १७ ॥

अस्याश्च राज्ञ्याः प्रणयप्रसङ्गो
व्ययं च दुर्गाक्रमणस्य तस्य ।
वृत्तान्त एषोऽपि पुराण एव
भ्रातर्न चैतानि चरित्रसारः ॥ १८ ॥

नरेतिहासस्य महान्ध्यकोणे
स्थिता अधो दृष्टिपथं न याताः ।
आवश्यकास्तास्तु कथा इदानीं
सत्योक्तयो हन्त न गूहनीयाः ॥ १९ ॥

'नैल्'-तीर-राज्ये सति कीदृशो सा
बभूव साधारणपौरवृत्ति ?
के 'ताज्-महाल्'-निर्मितिकाल आसन्
शिलाचयोद्वाहनकार्मिकास्ते ॥ २० ॥

साम्राज्य-विस्तारकदण्डयात्रा-
विधौ पदातिस्तुतसाहसः कः ? ।
आन्दोलिका न प्रभुणाऽधिरूढा
तस्याश्च दीना वद वाहका· के ॥ २१ ॥

या टाक्सिला'-पाटलिपुत्रपुर्यो
या मध्यमक्षोणिसमुद्रतीरे ।
हरप्प-मोहेंजदडो-नगर्यो:
*क्रोमानियानादिगुहामुखेषु ॥ २२ ॥

चरित्रसन्ध्यासमये तदानीं
नरस्य गाथाविवृतिः कथं सा ।
कस्मिश्च काले ननु कैश्च देशैः
किं साधितं यत् परमार्थभूतम् ॥ २३ ॥ (युग्मकम्)

किं शिल्पमत्राजनि ? किं च काव्यं
शास्त्रं च, गान्धर्वविधिः किमुत्थः ? ।
अस्थानमेतत् प्रति कां नु दीप्तिम्
कं स्वप्नमुद्दिश्य दिगन्तयात्रा ? ॥ २४ ॥

---

* Cromagnon caves

# निकषोपलः

## सामप्रातिशाख्यसंग्रहः (प्रथमो भागः)

सम्पादयिता-मायूरं रामनाथदीक्षितः । श्रुतिस्मृतिप्रकाशनसमितिः, काञ्ची-कामकोटिपीठम्, काञ्ची । १९७८ ॥

सम्पादका एते सुप्रसिद्धा कौथुमसामगानामग्रेसरा लक्षणविचक्षणाश्च । सामवेदसर्वस्वादिका ग्रन्थास्तैः पूर्वं प्रकाशिता । अस्मिन् पुस्तके दश साम-लक्षणग्रन्था मुद्रिताः—आर्चिकलक्षणम्, हितवाक्यम्, अवग्रहसूत्रम्, नारद-शिक्षासङ्ग्रहः, छन्दआर्चिकलक्षणम्, आर्चिकच्छलाक्षराणि, छन्दःपदच्छला-क्षराणि, तद्विवरणम्, पूर्वार्चिकपदानां छलाक्षरविवरणम्, छन्दोविचितिसूत्रं सविवरणम् । स्वल्पप्रचारस्य वेदस्य दुर्लभानां लक्षणग्रन्थानामेकत्र प्रकाशन-मिदं महत उपकाराय भवति । मुद्रणशुद्धावितोऽप्यधिकमवधानं देयम् ॥
(वे. रा.)

## वैदिककविता

लेखकः—हरिमोहनमिश्रः । प्रकाशकः—अनुपमप्रकाशनम्, पटना ८००००६. रू. ४०-०० ॥

हिन्दीभाषामये ग्रन्थेऽत्र ऋग्वेदसम्बन्धिनां परिगणितानां षोडश-सूक्तान्तर्गतानाम् ऋचाम् अनुवादः, व्याख्यानं च विद्यते । विस्तृतायां भूमिकायां ऋग्वेदसम्बद्धा बहवो विशेषा विचारिताः । यद्यपि एते विषयाः माक्समुल्लरप्रभृतिभिर्तत्र तत्र प्रस्तुता', तथापि तेष्वपि विमर्शन-पुरस्सरं केचन नव्या अभिप्राया आविष्कृताः । यथा (पृ. ८०) आधुनि-कमानसिकचिकित्सायाः प्रादुर्भावः दशममण्डले ५८, तथा ६० सूक्तयोः, एवं सप्तममण्डले द्वादशतमे सूक्ते च सूच्यते, यत्र म्रियमाणस्यापि मनः सजीवं रक्षितुम् उपायः सूचित इति । 'दृश्यते हि वागिन्द्रिय उपरतेऽपि मनःप्रवृत्तिः' इति सूक्तेरपि मूलम् एतत् स्यात् । आधुनिकस्य Psycho-Therapy इति मार्गस्येदमेव मूलम् । एवं सुबहुप्रौढविचारबहुलोऽयं ग्रन्थः न केवलं कवितादृष्ट्या, अपि तु वैदिकतत्त्वगवेषणदृष्ट्याऽपि महत्त्व-

पूर्णः । अत्र ग्रन्थे विचारितेषु विषयेषु विशिष्य ऋग्वेदसाहित्ये प्रतीक-योजना, वाक्यसङ्घटना, ध्वनिसङ्घटना, साहित्यस्य विविध- प्रकार इत्यादयो विशेषा अवश्यमत्रधेया. । ऋग्वेदसाहित्यस्य चरित्रम्, तदानीन्तनसमाज-संस्कृतिश्च विस्पष्टमत्र द्रष्टुं शक्यते । नूतनरीत्या ईदृशः प्रयासो ग्रन्थ-कर्तुरतीव प्रशंसार्हः । दिङ्मात्रमेवात्र ग्रन्थे ऋङ्मन्त्राः प्रदर्शिताः । अनया रीत्या अवशिष्टेष्वपि भागेषु ईदृशानि पुस्तकान्यस्माद् विदुष आविर्भूया-सुरिति विश्वासमः ॥ (चे. वा. श्री. आचार्यः)

## वैदिकमनोविज्ञानम् (दयानन्दसन्देशः)

सम्पादकः-राजवीर शास्त्री, प्रकाशकः-आर्ष साहित्य प्रचार ट्रस्ट्, २ एफ्, कमला नगर, दिल्ली-७. रू. ३-००.

'दयानन्द-सन्देश' नाम्न्या हिन्दीमासिकसञ्चिकाया' फिब्रुवरी, मार्च, एप्रिल् (१९७८) मासानां संयुक्ताङ्करूपोऽयं ग्रन्थ' । अत्र ग्रन्थे मनस्सम्बद्धाना वैदिक-ग्रन्थेषु स्थितानां वाक्यानां विचारः प्रस्तुतः । चतुर्ष्वपि वेदेषु, सांख्य-योग मूल-ग्रन्थेषु न्यायसूत्र-भाष्ययो , वैशेषिकदर्शने च यावान् मनस्सम्बन्धी वाक्यकदम्बो वरीवर्ति, तेषां समेषामप्यनुशीलनमत्र कृतम् । मनो विना ज्ञानस्य सम्भवो भवेद्वा न वा?, आत्ममनसोः कः सम्बन्धः?, शरीरे मनः कुत्र वर्तते?, शरीराद् बहिश्चलति न वा?, किं मन एव जीवः, उत न?, मनो भौतिकमुताहङ्कारिकम्?, मनो विभु, उताणु? इत्यादीना प्रमेयाणामत्र प्रमाणप्रदर्शनपूर्वकं वैदिकवाक्याविरोधेन विचार्य निर्धारणं कृतम् । 'प्रवृत्तिः वाग्बुद्धिशरीरारम्भः' इति न्यायसूत्रे मनसो बुद्धिशब्देनोपादाने निदानमत्र प्रदर्शितं नितरां विचारणीयम् । अन्ते च 'आधुनिक मनो-विज्ञान' इति शीर्षके मनोविषये यद् विशदं पाश्चात्यानां मतमप्याविष्कृतं, तच्च वैदिकसिद्धान्तस्यादूरविप्रकृष्टम् इति च निर्गमितम् । किं बहुना? पारेशतं मनोविषयकं वैदिकवाक्यजालमत्रोपस्थाप्य परस्पराविरोधेन शास्त्रज्ञ-दृष्ट्या युक्तिप्रदर्शनेन च यद् सङ्गमित, तेन ज्ञायतेऽयं ग्रन्थकारः सुबहु सूक्ष्मेक्षिकया साम्प्रदायिकार्थपरिशीलननिपुण इति । अवश्यमेव ईदृशाः ग्रन्था

अद्यत्वे विद्यार्थिनामुपकुर्यु । विश्वविद्यालयेषु ग्रन्थोऽयं मनोविज्ञानविभागे पाठ्यग्रन्थत्वेन सर्वैस्समादरणीयः । यदि गैर्वाण्या रचितः स्यात्, तर्हि दाक्षिणात्यविपश्चितामपि सुदूरमुपकारकः स्यात् । हिन्दीभाषायां लिखितोऽयम् ।
(चे. वा. श्री. आचार्यः)

## वेदेषु "श्रद्धा"

आङ्ग्लग्रन्थः । कर्ता - डा. जि. एस्. पेण्डूसे । प्रकाशनम् - दि एन्जेल्स् मेमोरियल् ट्रस्ट्, पुण्यपत्तनम् । १९७८. रू. ३०.

विश्वासापरपर्यायः 'श्रद्धा'शब्दः, क्रियमाणेषु कर्मसु हृदयस्य निधानमित्यस्मिन्नर्थे प्रयुज्यते । श्रद्धाया महत्त्वमावश्यकता च वेदवेदान्तपुराणेतिहासकाव्यप्रभृतिषु वाङ्मयशाखासु सुस्पष्टं विज्ञायते । वेदवाङ्मये श्रद्धाया देवतात्वेन रूपणं प्रसिद्धम् । परस्य पुरुषस्य श्रद्धैव शिर इति तैत्तिरीया अधीयते । "श्रद्धया देयम्" "अश्रद्धयादेयम्" इत्यनयोः तैत्तिरीयानुशासनयोः श्रद्धायाः प्रशंसा, तदभावस्य च निन्दा स्पष्टमुक्ते । भगवद्गीतासु च बहुत्र श्रद्धाया प्रामुख्यं निरूपितम् । श्रीशङ्करप्रभृतयः आचार्या श्रद्धायाः प्रामुख्यमुपावर्णयन् ।

प्रकृते ग्रन्थे श्रद्धाख्यभावनायाः चरित्रं तत्त्वं च डा. पेण्डूसेमहोदयैः सम्यङ् निरूपितमस्ति । "भारतसांस्कृतिकविषये नूतनं दृक्पथम्", "वेदेषु श्रद्धा", "तदन्यवाङ्मये श्रद्धा", "सम्प्रदाये आचरणे च श्रद्धायाः स्थितिः", "विज्ञानशास्त्रम् - श्रद्धा च" इति विभक्तेषु पञ्चस्वध्यायेषु श्रद्धाविषये वक्तव्यं सर्वमपि कूलङ्कषतया प्रतिपादितं वर्तते । भारतीयसंस्कृतेरभिवर्धने श्रद्धायाः प्रमुखं स्थानं चारित्रिकदृष्ट्या प्रकटीकृतम् ।

डा० वे. राघवार्याणामामुखेन भारतप्रथममन्त्रिणां सन्देशेन च भूषितोऽयं ग्रन्थः सर्वजिज्ञासुजनोपकारकः अभिनन्दनीयो भवति ॥ (मु. न.)

## श्रीमद्भगवद्गीता - कश्चन विचारः

मास्ति वेङ्कटेश अय्यङ्गार् । जीवनकार्यालयः, बङ्गलूर् । १९७८. रू. १२.

'मास्ति' इत्युक्तमात्र एव कश्चन प्रभावशाली पुरुषविशेषः कन्नड-साहित्यप्रपञ्चे पुरस्तादुदेति । स हि न केवलं कर्णाटभाषायाम्, अपि तु संस्कृतेऽपि कृतबहुग्रन्थावगाहन. । तस्य रामायण - महाभारतयो-र्विचारस्सुविदित एव । चिरात्तस्य भगवद्गीतायामपि प्रवृत्ता मतिः सम्प्रति प्रस्तुतं गीताविमर्शं प्रसूतवती । यथा इतिहासद्वयविषये, एवं गीतायामपि पूर्वतनो भागः कश्चन, तदुपबृंहणतया पश्चादायोजितौ द्वौ भागौ इति तस्य मतम् । एतेन गीताया माहात्म्यं सर्वश्रेष्ठत्वं वा न हीयते । गीतासदृशो हिन्दुमत-सर्वस्वभूतः प्रसन्नोदारो ग्रन्थो नास्त्येव । यद्यप्यस्य 'मास्ति' महाशयस्य विश्वरूपदर्शनादिषु अद्भुतांशेषु नैव प्रत्ययो वर्तते, तथापि गीतासन्देशस्य महार्घतायां न स विप्रतिपद्यते । स सारभूत सन्देशः 'स्वकर्मणा तमभ्यर्च्य' इत्यस्मिन् चरमाध्यायश्लोके दत्तः । उपोद्घातादनन्तरं गीताया आङ्ग्लानुवादः । अन्ते बह्वयो विप्रतिपत्तयः परस्परं दु शकसमन्वयाश्च भागा विचारिताः ॥

(वे. रा.)

## दक्षिणामूर्तिस्तोत्रम् - श्रीशङ्कराचार्यकृतम् सुरेश्वराचार्यकृतेन मानसोल्लास-वार्त्तिकेन प्रणववार्त्तिकेन च , तथा दक्षिणामूर्त्युपनिषदा च सहितम्

अल्लाडि-महादेवशास्त्रिणा आङ्ग्लानुवादेन सह सम्पादितम् । "समता-बुक्स्", १० कामराज्-भवन् , १११, मौण्ट् रोड्, मद्रास् ६. १९७८. रू २५.

कीर्त्तिशेषेण महादेवशास्त्रिणा बहवो वेदान्तग्रन्था आङ्ग्लानुवादेन सह प्रकाशिताः येषु शङ्करभाष्यसहिता भगवद्गीता मुख्या । सर्वे प्रामाणिकाः । तस्य ग्रन्था तत्र तत्र मुद्रिता नेदानीमुपलभ्यन्ते । अतः "समतापुस्तक"-मालाधिकृतैर्य उपात्तः तेषा पुस्तकानां 'फ़ोटो -द्वारा पुन प्रकाशनकार्यक्रमः स श्लाघार्ह । गीता-प्रकाशानन्तरमद्य दक्षिणामूर्तिस्तोत्रमद्य तैः प्रकाशितम् । अग्रे शाङ्करवेदान्तविषयक ५५-पत्रात्मक उपोद्घातः, ततः स्तोत्रस्य अनुवादः टिप्पणं च, ततः अनुवादेन सह प्रणववार्त्तिकं दक्षिणामूर्त्युपनिषच्च अत्र पुस्तके वर्तन्ते । शोभनं मुद्रणम् ॥ (वे. रा.)

वेदान्तसारः श्रीसदानन्दविरचितः श्रीरामतीर्थविरचितविद्वन्मनोरञ्जनी-टीकासमेतः ।

राममूर्तिशर्मणा हिन्दीव्याख्यया सह सम्पादिता । प्राप्तिस्थानम्-नेषनल् पब्लिषिङ्ग् हौस्, २३ दरियागंज्, नयी दिल्ली ११०००२. रू ३५-००.

अद्वैतवेदान्तजिज्ञासूनामतीवोपयुक्तोऽयं वेदान्तसाराख्यो ग्रन्थः वेदान्त-प्रकरणग्रन्थेषु बालबोधाय नितान्तमुपयुक्तः । सन्त्यनेका व्याख्या अस्य, तेषु श्रीरामतीर्थविरचिता विद्वन्मनोरञ्जनी नातिविस्तरं यावदपेक्षितविशदं मूलं व्याकरोति । वेदान्तसागरे प्रविविक्षूणां नौरिवेयं व्याख्याऽत्र विस्तरेण देशभाषया श्रीराममूर्तिशर्मणा अनुसृता । स्वकाये वित्तृते हिन्दीव्याख्याने सर्वसुलभावबोधया प्रणाल्या वेदान्तशास्त्रप्रमेयाणि तेन विवृतानि । मूलेन साकमेव संस्कृतव्याख्या यदि मुद्रिता स्यात्, तदा हिन्दीभाषापरिचयरहितानामपि महते उपकाराय स्यात् । अत्र तु पृथगन्ते संस्कृतव्याख्याऽऽयोजिता । अन्ते प्रदत्ता विशिष्टपदविवरणप्रक्रिया अतीवोपयुक्ता । पारिभाषिक-शब्दानां प्राचीनवाक्यैरेव विवरणं ग्रन्थकारस्य प्रामाणिकत्वं, मतस्य सुज्ञेयता च युगपत् प्रकाशयति । भूमिकापठनेन राममूर्तिशर्मण भूयान् शास्त्रप्रवेशः सुज्ञानः । अद्य ईदृशानां शास्त्रानुबन्धिनां ग्रन्थाना देशभाषयाऽनूद्य प्रचार आवश्यक इति सकालोऽयं प्रयासः । मूल्यं परमतीवाधिकम् ॥

(चे. वा. श्री. आचार्यः)

श्रीरामानुजदर्शनं, मतं च

आङ्ग्लग्रन्थः - कर्ता डा. प्र. ब्र. विद्यार्थी । प्राचार्य एम्. रङ्गाचार्य स्मारकसंस्था, मद्रास-५. १९७७ रू. ४०.

भारतदेशस्य प्रधानदर्शनेषु विशिष्टाद्वैतमन्यतमं भवति । भगवद्रामानुजेन प्रतिष्ठापितमिदं दर्शनमधिकृत्य डा. विद्यार्थिमहोदयैः मद्रपुर्यां १९७२ तमे संवत्सरे चत्वार उपन्यासाः कृताः । प्राचार्य - रङ्गाचार्यस्मारकसमित्या प्रवर्तिता एते उपन्यासा ईषद्विस्तार्येदानीं प्रकृतग्रन्थरूपेण मुद्रिताः ।

आद्येऽध्यायत्रितये दर्शनस्य मतस्य च लक्षणे, रामानुजदर्शने तयोरविनाभावसमन्वयः, चिदचिदीश्वराख्यस्य तत्त्वत्रयस्य चारित्रिकस्वरूपवर्णनं चेत्यादयोंऽशाः निरूपिताः । चतुर्थेऽध्याये ईश्वरतत्त्वं विमृष्टम् । उपनिषत्सु गीतायां च स्थितमीश्वरनिरूपणं रामानुजसिद्धान्तानुगुणमेवेति अनन्तरे अध्यायद्वये प्रतिपादितम् । अन्तिमेऽध्याये श्रीशङ्करभास्करयादवानां मते ईश्वरतत्त्वं कथमित्ययमंशो निरूपितः ।

रामानुजदृष्ट्या परं ब्रह्म सगुणमेवेति, सगुणनिर्गुणब्रह्मद्वितयमत्र नाङ्गीक्रियत इति, अद्वैतिभिरभ्युपगतो व्यावहारिक-पारमार्थिक-सत्ययोर्भेदः ईश्वरस्य महिमानमपकर्षतीति, तेन चास्मादृशां परिमितशक्तिकानां जीवाना-मीश्वरस्य च भेदो न स्यादिति, तथा सति वेदान्तोपदिष्टमोक्षकथाप्रसङ्ग एवास्माकं न सङ्गच्छत इत्यादयो बहवोंऽशा अत्र सप्रमाणं सयुक्तिकं च निरूपिताः । मतविषये च पाश्चात्त्यानां रामानुजीयानां च मध्ये स्थितं साम्यमपि चरमाध्याये सम्यङ् निर्दिष्टम् ।

विशिष्टाद्वैतदर्शनमधिकृत्य प्रामाणिका ग्रन्था बहवो न सन्तीति केचिदभि-प्रयन्ति । प्रकृतो ग्रन्थः तद्विषय इत्यामोदस्थानम् । श्रीरामानुजसिद्धान्तविषये अन्यैर्दार्शनिकैः उद्भावितानि बहूनि चोद्यानि सप्रमाणं सरलया आङ्ग्ल-भाषया एतद्ग्रन्थरूपेण परिहरन्तः श्रीविद्यार्थिमहाभागाः सकलविद्वद्भि-रभिनन्दनीयाः ॥ (मु. न.)

## ब्रह्मसूत्राणि - प्रधानव्याख्यानानि च

आङ्ग्लग्रन्थः । तृतीयः सम्पुटः । कर्ता डा० बि. एन्. के. शर्मा । प्रकाशनम् - भारतीयविद्याभवनम्, मद्रास् । १९७८. रू. १२०.

प्रस्थानत्रयेऽन्यतमस्य बादरायणकृत-ब्रह्मसूत्रस्य श्रीशङ्करभास्कररामानुज-प्रभृतिभिः आचार्यैः स्वस्वमतानुसारेण विरचितानि व्याख्यानानि सन्ति । तत्रापि श्रीशङ्कररामानुजमध्वाचार्यकृतान्येव व्याख्यानानि प्रसिद्धानि । प्रधान-तत्त्वविचारणे एतेषामाचार्याणां दृक्पथाः कथं वर्तन्त इति तोलनात्मकतया प्रदर्शनं तावत् सर्वेषां जिज्ञासूनां महत उपकाराय कल्पते । "थीबो", "घटे", राधाकृष्णपण्डिता एतद्विषये श्लाघनीयं परिश्रमं कृतवन्तः ।

मध्वसिद्धान्तविचारनिपुणा संस्कृताचार्याः बी. एन्. के. शर्ममहोदया एतादृशविचारे कृतविशिष्टपरिश्रमा ।

इत. पूर्वं प्रकाशिते सम्पुटद्वये आप्रथमाध्यायात् तृतीयाध्यायप्रथम-पादपर्यन्तं श्रीशङ्कररामानुजमध्वाना शारीरकभाष्याणि सम्यगालोड्य तोलनं कृतवन्तः शर्ममहोदयाः । प्रकृते विमृश्यमाने अन्तिमे तृतीयसम्पुटे अवशिष्टानां सूत्राणां तैः विचार. कृतः ।

प्रपञ्चस्सत्यभूत इति, स्वप्नानुभवोऽपि सत्य इति, मुक्तानामपि सगुण-ब्रह्मानुभव इति, भक्ते मोक्षसाधनत्वमित्येतेषु विषयेषु रामानुजमध्वयोः सामरस्येऽपि, सूत्राक्षरविवरणे, पौर्वापर्यसङ्गतिप्रदर्शने, भक्तेरेव परमसाधनत्व-प्रतिपादने श्रीतत्त्वस्येदमित्थमिति प्रदर्शने च आनन्दतीर्थ एव रामानुजापेक्षया सूत्रकारस्य आशयं सुष्ठु विशदीकरोतीति श्रीशर्मणामाशय. । सर्वस्यापि जगतः सत्यत्वं परमेश्वरकर्तृकत्वेन यदुपक्रान्तं प्रथमे सूत्रे, तदेव मुक्तानां जगद्व्यापारवर्जनपुरस्सरं ब्रह्मभोगसाम्यप्रतिपादनेन अन्तिमे सूत्रे उपसंहृतमिति, ततश्च ब्रह्मणस्सगुणत्वमेव सूत्रकाराभिमतं, न तु शङ्करोपवर्णितं निर्गुणत्वमिति मध्वाचार्यस्य व्याख्याने स्पष्टमभिहितम् । गुणोपसंहारप्रक्रियापि ब्रह्मणस्सगुणत्व एव सङ्गच्छते, न तु निर्गुणत्व इत्यपि मध्वभाष्ये सुनिरूपितम् ।

जीवेषु भक्तेस्तारतम्यं, परस्परगुणविभेदः, तत्करणीयं, चतुर्गुणोपासनं, गुरुप्रसाद-स्वप्रयत्नयोः मुक्तिविषये साधनत्वेन सामरस्यं, भक्तेरपि भगवत्प्रसादादेव मोक्षसाधनत्वं, श्रियः शारीरलयाभाव इत्यादयो बहवः तात्त्विकांशाः मध्वप्रतिपादिताः शर्ममहोदयैः सुष्ठु विचारिताः ॥ (मु. न.)

## मालविकाग्निमित्रम्

कालिदासकृतम् । सम्पादकः - के. ए. सुब्रह्मण्य अय्यर् । साहित्य-अकादमी, नवदेहली । १९७८. रू. १५.

कालिदासकृतीनां नूतनानि संस्करणानि सम्पाद्य प्रकाशनीयानीति साहित्य-अकादमी-परिषदोऽध्यवसायमनुरुद्ध्य निर्वर्त्तितमिदं मालविकाग्नि-

मित्रस्य सम्पादनम् । सम्पादकाश्च सुविदिताः प्राचार्याः लक्ष्मणपुरी-विश्वविद्यालय-भूतपूर्वोपकुलपतयः के. ए. एस्. अय्यर्-नामान ।

अस्मिन् व्यवसाये न केवलं रूपकस्यास्य पूर्वं तैस्तैः सम्पादिता मुद्रिता ग्रन्था उपयुक्ताः, अपि तु तत्तत्प्रान्तीयभाषालिपिषु वर्तमाना मातृकाश्च । यथा रघुवंश-मेघदूत-शाकुन्तलानां विषये न तथा मालविकाग्नि-मित्त्रविषये महान्तः पाठभेदा अधिकश्लोकाः इत्यादिक्लेशोऽस्ति । प्रचारे प्राचस्सर्वसंमत· पाठ एव दृश्यते; भेदाश्च तत्र तत्र कतिपय-पदेषु दृश्यन्ते, येऽत्र सम्पादकैर्निर्दिष्टाः । प्रथममाङ्ग्ल-उपोद्घाते अय्यर्-महाशयः कालिदास-कवितायां चमत्कारावहः कश्चन अंशः बहुभिरुदा-हरणैर्निरूपितः । वस्तुद्वय-संमेलनेन तयोः कमपि साम्यं सम्बन्धान्तरं चोपन्यस्य वर्णनाचातुर्यं वाग्वैचित्र्यं भावपुष्टिं च यत्कालिदास· प्रकटयति, तस्याक्लिष्टस्य प्रयोगसौभाग्यस्य उचितान्युदाहरणानि सकलय्य दत्तानि सम्पादकैः । अन्ते विशिष्टस्थलेषु टिप्पण्यश्च योजिताः । अत्र विशेषेण अलङ्कारशास्त्रदृष्ट्या तत्र तत्र सम्भवन्तोऽर्थालङ्कारादयो निरूपिताः । मुद्रा-राक्षसास्तु किञ्चिदधिकतया दृश्यन्ते ॥ (वे. रा.)

## काव्यत्रिवेणी - ऋतुचक्रम्, गङ्गातरङ्गम्, गोदागौरवम्

वि. के. छत्रे शास्त्री, जोगळेकर् वाडा, कल्याण्, महाराष्ट्रम् । १९७८. रू. १२-००.

काव्यत्रिवेण्या रचयिता छत्रे-महोदयः प्रतिभावाचकानां परिचित एव । प्रस्तुते काव्यत्रितये प्रथमं ऋतुचक्रं नाम काव्यम् । अत्र निसर्गवर्णनेन सह परम्परागतरूढीनां षड्ऋतुषु महाराष्ट्रे प्रवर्तितानाम् उत्सवविशेषाणां सरहस्यं वर्णनं च कृतम् ।

शिखरिणीच्छन्दसि ग्रथितं ५४-श्लोकात्मकं गङ्गातरङ्गं नाम द्वितीयं बहुत्र गङ्गालहरीं तद्रचयितारं जगन्नाथपण्डितं च स्मारयति । तृतीयं गोदागौरवाख्यं काव्यमपि शिखरिणीवृत्ते एव निबद्धम् । आन्ध्रप्रदेशे

वहन्त्या गोदाया उद्गम', तत्तीरस्थतीर्थादीनि ऐतिह्यप्रसिद्धस्थलानि इत्येतत् सर्वं चित्रितमत्र । 'पुरुषार्थ'-मासिकपत्रे पूर्वं क्रमशः प्रकाशितम् इदं काव्यम् ॥ (स सु. जा.)

श्रीशारदादेवीचरितसङ्ग्रहः

रचयित्री श्रीमती अम्बाडो देवकी मेनोन् । श्रीरामकृष्णमठम् , महिलापुरी, मद्रास् ६००००४ । १९७७. रू. ५-००

बालानां सुखबोधाय 'श्रीमाता' इति प्रथितायाः श्रीशारदादेव्याः सच्चरित्रस्य सङ्ग्रहः कवयित्र्या नवसर्गात्मकेऽस्मिन् काव्ये कृतः । भूयसा अनुष्टुप्छन्दसि ग्रथितमिदं काव्यं भाषायास्सुगमतया विषयस्य उदात्ततया च सहृदयहृदयावर्जकं भवति । अत्र न केवलं शारदादेव्याश्चरितामृतं किन्तु तस्या उपदेशरत्नानि चाविष्कृतानि । काव्यस्य अन्तरे अन्ते च निबद्धानि भावभरितानि शारदादेवीस्तोत्राणि वाचकेषु भक्तिप्रकर्षं जनयन्ति । खण्डकाव्यस्यास्य आङ्ग्लानुवादोऽपि ग्रन्थकर्त्र्या आयोजित इति अपरो विशेषः ॥ (स. सु. जा )

श्रीजवाहरज्योतिः

लेखकः - रघुनाथप्रसाद चतुर्वेदः । पुस्तकप्राप्तिस्थानम् - दशभुजीगणेश, मथुरा । रू. २-५०.

विश्वविख्यातस्य भारतकर्णधारस्य दिवङ्गतस्य पण्डित - जवाहरलालनेहरू - महाभागस्य चरित्रं वर्णयदिदं महाकाव्यं एकविंशतिसर्गात्मकं रघुनाथ-प्रसादेन महाकाव्यलक्षणानुरोधं सरसं सरलं गम्भीरं चात्र ग्रथितमस्ति । संस्कृतभाषायाः जनप्रियताविधाने काव्यानीदृशानि महद् उपकरिष्यन्तीत्यत्र न सन्देहः ॥ (स सु. जा.)

नीतिकथाभाण्डारम् - प्रथमो भागः

लेखकः - ए एन्. भट्टः । अनुवादकः राजनाथ द्विवेदी । प्रकाशयिता- ए. एन्. भट्टः, ब्रिस्टल् फोर्ट्. मुम्बई - ४००००१. १९७८. रू. ५-००.

नीतिबोधकथागुच्छकेऽस्मिन् प्रथमे भागे शतं लघ्व्यः कथाः गद्यशैल्या बालानां सुबोधया भाषया लिखितास्सन्ति । मुम्बईनगरवास्तव्यः श्री ए. एन. भट्टः एताः कथाः विलिख्य द्वाविंशतिसंख्याकासु भारतीय-भाषासु परिवर्तनं समपादयदित्ययं विषयः प्रशंसार्हः । पूर्वं 'सुधर्मा'यां दिनपत्रिकायां प्रकाशिताः संस्कृतेऽनूदिताः शतसंख्याका एताः कथाः, ग्रन्थ-रूपेणात्र संकलिताः । सुगमा हृदयङ्गमा च रचना ॥ (स. सु. जा.)

## हास्यविनोदवाटिका

सम्पादकः - वासुदेव - द्विवेदी । सार्वभौमसंस्कृतप्रचारकार्यालयः, वाराणसी । १९७८ रू. २-५०.

वाराणस्यां विद्यमानः सार्वभौम-संस्कृतप्रचारकार्यालयः, तत्कार्यनिर्वाहकः वासुदेव - द्विवेदिमहाशयः, तस्य संस्कृतप्रचारकार्ये ऐकाग्र्यम् उपायनैपुणं चेत्येतत् सर्वं सुविदितमेव । एतेन महाशयेन संस्कृतसाहित्ये प्रसिद्धकाव्य-नाटक-सुभाषितग्रन्थेभ्यः तथा क्षुद्रकाव्येभ्यश्च हास्यविनोदपूर्णान् मनोहरान् श्लोकान् उद्धृत्य निर्मितेयं हास्यविनोदवाटिका । अत्रान्तर्गतानां श्लोकानां तदाधारग्रन्थैस्सहिता सूची च परिशिष्टे दत्ता ॥ (स. सु. जा.)

## मनसिजोपनिषद्

कृष्णशर्मा जैतली, ८१९ - अ, भवानी पेठ, पुणे - ४११००२.

कामं लौकिकमलौकिकं चाधिकरोत्ययं ग्रन्थः । सात्त्विकः काम आनन्द-मात्रभावनया मोक्षाय कल्पते, अथवा तदाभासः, तदुपायश्च भवति । अयमभिप्राय एव ग्रन्थकृतात्र वैदिक्या शैल्या उपनिषद्रूपेण सन्दब्धः । काम-मधिकृत्य ऋक्षु, अथर्वमन्त्रेषु दृष्टानि वाक्यानि ग्रन्थकृद्वाक्यैः स्यूतानि । तथा वेदे गृह्यसूत्रेषु कामशास्त्रे च स्त्रीपुंसंसर्गमधिकृत्य ये विषया वर्णिताः, तेऽप्यन्तर्भाविताः । चमत्कारी ग्रन्थकृतो व्यवसायः । केचन शब्दप्रमादाः तत्र तत्र उन्मिषन्ति ॥ (वे. रा.)

संस्कृते वैज्ञानिकं वाङ्मयम्

डा० एस्. वेङ्कटसुब्रह्मण्यार्यैः सम्पादितम् । संस्कृतविभागः, केरल-विश्वविद्यालयः, तिरुवनन्तपुरम् । १९७८. रू. १२.

संस्कृतभाषायाः, तद्वाङ्मयस्य कोऽधुनातने काल उपयोगः? आद्यत्विकज्ञानवृद्धया सह तयोस्समन्वयो वर्तते वा? इत्यादिकाः प्रश्नाः पुनःपुनरद्य उद्यन्ति । संस्कृतविद्वद्भिः, संस्कृतानुरागिभिश्च समाधेयोऽयं प्रश्नः, अन्यथा संस्कृताध्ययने प्रवृत्तिह्रास इतोऽप्यधिकं भवेत् । प्रश्नस्य उत्तरमेकमस्ति यत्संस्कृतसाहित्ये नवीनविज्ञानमार्गेषु यद् गणितं, ज्योतिःशास्त्रं, वैद्यमित्यादि तत्सर्वमाधुनिकविज्ञानेन सह तोलनामर्हति । प्राचीने काले भारतादेव इमानि विज्ञानप्रस्थानानि पाश्चात्त्यदेशीयैः शिक्षितानि इति । अनया दिशा सम्प्रति भारते विश्व-विद्यालयेषु अन्यासु च संस्थासु शासकीयैरन्यैश्च विद्वद्भिः बहु विमर्श-कार्यं साधितं वर्तते ।

अमुमेव विषयमधिकृत्य केरलविश्वविद्यालये समीक्षागोष्ठी नचिरात् प्रवृत्ता । तत्र उपन्यस्ता निबन्धाः संकलय्यात्र प्रकाशिताः । ते यथा-संस्कृते ज्योतिषं, गणितं च - के. वि. शर्मा; वैद्यं-डा० के. राघवन्, तिरुमुलपादः; वास्तुशास्त्रं शिल्पं च - डा० एन्. वि. मल्लय्या; गीत-नृत्तादिकलाः-सम्पादकः; भाषाविज्ञानम् - डा० के. के. राजा; नवीनं विज्ञानम् -डा० कुमारी कादम्बरी हरवु; अस्मिन् प्रस्थाने भोजदेवकृतः परिपोषः-डा० वे. राघवः; वैद्यपरिभाषा-डा० ए. हेच्. वि. षेणाय् । सर्वेषामेव विभागानामेषां सामान्यतो विमर्शः-एन्. वि. वारियार् ॥

(वे. रा.)

सोढलनिघण्टुः - सोढलविरचितः

डा० प्रियव्रतशर्मणा सम्पादितः । गायकवाड प्राच्यग्रन्थमाला १६४, बरोडा । १९७८. रू. ५३.

सम्पादक एष वाराणसी-हिन्दु-विश्वविद्यालये आयुर्वेदविभागे द्रव्यगुण-कक्ष्याया अध्यक्षः । तेन स्वाधिकारानुरूपं आयुर्वेदीयानामोषधीनां तद्गुणानां च विशिष्य अनुस्यूततया विचारः प्रवर्तितः । इतः पूर्वं बहव ओषधिनिघण्टवः तेन प्रकाशिताः ।

प्रस्तुतो द्रव्यगुणनिघण्टुः प्रायः १२-शताब्द्यां सन्दृब्धः । भूयसा धन्वन्तरिनिघण्टुमाधारीकृत्य रचितः । ग्रन्थकर्ता रैक्कालब्राह्मणकुलोद्भवः, स्वच्छनाम्नो विदुषः पुत्रः । सङ्गीतरत्नाकरकारः शार्ङ्गदेव आत्मानं सोढलसूनुं वर्णयति; द्वयोः सोढलयोरैक्यं यत् शङ्क्यते सम्पादकेन, न तत् संभाव्यते ।

गुणसंग्रहः, नामसंग्रहः इत्यादिविविधैर्नामभिः दृष्टस्य ग्रन्थस्यास्य द्वे मातृके संगृह्य सम्पादनमिदं कृतम् । अत्र द्वौ भागौ वर्तेते, नामसङ्ग्रहः, गुणसङ्ग्रह इति । नामसङ्ग्रह इति यद्यपि नाम, तथापि न केवलमोषधीनां पर्यायनामान्येव-यथा निघण्ट्वन्तरेषु-तथाऽत्रापि दत्तानि; किन्तु तेषां गुणा उपयोगाश्च । अयमंशो गुणसङ्ग्रहभागे विशेषेण दृश्यते । आङ्ग्ल उपोद्घातः, द्रव्यसूचयश्च योजिताः । सम्यक् सम्पादितोऽयं ग्रन्थः ॥ (वे. रा.)

## विष्णुधर्मोत्तरस्थं चित्रसूत्रम्

सि. शिवराममूर्तिः । कनकप्रकाशनम्, नवदेहली । १९७८. रू. २१०.

चित्रकलामधिकृत्य न बहवो ग्रन्थाः संस्कृतवाङ्मये वर्तन्ते । ये त्रिचतुरा वर्तन्ते तेषु सुविदितः विष्णुधर्मोत्तरपुराणे दृश्यमानः चित्रसूत्राभिधो भागः । स च भागः भारतीयचित्रकलारसिकानां चिराद् ज्ञात एव । स्टेल्ला-क्रामरिष्, प्रियबला षा इत्येताभ्यां अनूदितः, सम्पादितः, चर्चितश्च । तत्रत्या विषयाः आनन्दकुमारस्वामि-प्रकृतविमर्शक-प्रकृतग्रन्थकृत्प्रभृतिभिः विचारिताश्च ।

अस्य चित्रसूत्रस्य मूलम्, आङ्ग्लानुवादः, उपोद्घाते विमर्शनम् इति त्रयो भागाः ग्रन्थकृता अत्र दत्ताः । यद्येत एवात्र दत्ता अभविष्यन्,

न तथा पुस्तकस्यास्य शोभा आदरणीयता वा अभविष्यत् । ग्रन्थकृता बहूनि भारतीयचित्रशिल्पादिच्छायाचित्राणि योजयित्वा एतादृशपुस्तकरसिकानां मनांसि आकृष्टानि । तत्र तत्र स्वयं रेखाचित्रे कुशलो ग्रन्थकर्ता विषय-वैशद्याय तादृशचित्राणि ग्रन्थेऽत्र ददाति । किन्तु प्रायो धनिका वैदेशिकाः कलाकुतुकिनश्चैव २१० रूप्यकाणि दत्त्वा पुस्तकमिदं स्वीकर्तुं प्रभवन्ति ॥

(वे. रा.)

## मीमांसा-शाबरभाष्यम्

आर्षमतविमर्शिन्या हिन्दीव्याख्यया सहितम् । व्याख्याता-युधिष्ठिर-मीमांसकः । प्राप्तिस्थानम्-रामलाल कपूर ट्रस्ट, बहालगढ, सोनिपत, हरियाणा । रू. ३०-००; ३२-०० ॥

पूर्वमीमांसादर्शनस्य प्रसिद्धं शाबरं भाष्यं बहोः कालाद् अलभ्यमासीत् । साम्प्रत प्रसिद्धवैदुष्यसम्पन्नेन विरचितनैकविधविशिष्टग्रन्थेन वैयाकरण-मूर्धन्येन राष्ट्रपतिसम्मानितेन पण्डितप्रवरेण युधिष्ठिरमीमांसकेन प्राप्तकालं हिन्दीभाषाव्याख्यानेन सह परिष्कृत्य मुद्रितम् । प्रथमाध्यायपर्यन्तं प्रथम-सम्पुटे, द्वितीयाध्यायमारभ्य तृतीयप्रथमपादपर्यन्तं द्वितीयसम्पुटे च प्रकाशितम् । पूर्वमीमांसाप्रचारणधुरन्धराणां महामहोपाध्याय ब्रह्मश्री चिन्नस्वामिशास्त्रि-वर्याणामेते युधिष्ठिरमीमांसका अन्तेवासिन इत्येतदेवैतेषां वैदुष्य-प्रकटनायालम् । स्वाभाविकी विमर्शकधोरणी पदे पदे व्याख्याने दरीदृश्यते । प्रतिसूत्रं सावधानेन सूत्राक्षराणि व्याख्याय, भाष्यं तदनु व्याख्याति । भाष्यगता विशेषांशाः सप्रमाणं विमृष्टाः । भाट्टप्राभाकरप्रस्थानद्वयस्यापि गन्धोऽत्र न सङ्कीर्णः । केवलं भाष्यभावप्रकाशनैदम्पर्येण भाष्यस्यान्तरोऽर्थो गवेषितः । यथोपलम्भं भाष्योपात्तानां प्रमाणानामाकरोऽप्यधस्तान्निर्दिष्टः । भाष्ये प्रयुक्तानां पारिभाषिकशब्दानां टिप्पण्यां विवेचनं कृतम् ।

विस्तृतायां भूमिकायां त्रयोंऽशाः प्रस्तुताः ।

(१) शास्त्रावतारमीमांसा - अत्र मीमांसादर्शनस्य संक्षिप्त इतिहासः, उपलभ्यमानानां ग्रन्थानां ग्रन्थकाराणां च परिचयः मीमांसाध्ययनाध्यापनयोः प्रयोजनम्, सङ्कर्षकाण्डपरिस्थितिः इत्यादिकं सविस्तरं प्रतिपादितम् ।

(२) वेदश्रुति-आम्नाय-संज्ञामीमांसा इति शीर्षके वेदशब्दस्य द्वैविध्यम्, 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति आपस्तम्बवाक्यविचारः, श्रुति-आम्नाय-संज्ञयोर्विचारः-इत्यादिकं सप्रमाण दत्तम् ।

(३) श्रौत-यज्ञमीमांसा इति तृतीयो भागः । अत्र यज्ञशब्दनिर्वचन-मुपक्रम्य, द्रव्ययज्ञनिरूपणं प्रस्तुत्य, सुबहु विमृष्टम् । अन्ते पशुयज्ञोऽ-ध्वरेऽसाम्प्रदायिक इति च निर्णीतम् । यज्ञे पश्वालम्भनं भ्रममूलकमेव, पिष्टपश्वालम्भन एव श्रुतिनैर्भर्यमिति च निगमितम् । विषयोऽयं विचारार्हः । 'अशुद्धमिति चेन्न शब्दात्' इत्यत्र सर्वैः ब्रह्मसूत्रभाष्यकारैः 'न वा उ एतान्म्रियसे न रिष्यसि—' इति मन्त्रवर्णप्रदर्शनपुरस्सरं अद्ययावत् अविगीत-शिष्टाचारे यज्ञीयपश्वालम्भनस्यादुष्टत्वं, साम्प्रदायिकत्वं च समर्थितम्; अद्ययावत् सर्वैरपि भारतीयैर्याज्ञिकैरनुष्ठीयते च । ईदृशे विषये आलम्भन-शब्दस्य स्पर्श एवार्थ इति व्याख्यातुराशयः । स चात्र महता संरम्भेण चरक-सूत्रस्थानादिप्राचीनवाक्यकदम्बप्रदर्शनेन साध्यते ।

क्वचित् कचिद् भाष्यपाठेषु सामीचीन्यविवेचनमपि कृतं यत्, तत् विदुषां हृदयङ्गमम् । अवश्यमनयैव दिशा ग्रन्थोऽयं आन्तं शीघ्रमेव प्रकटी-भूयात् । विशिष्टेषु स्थलेषु विप्रतिपत्तिसद्भावेऽपि मीमांसातत्त्वजिज्ञासवो नितान्तमुपकृता अनेन ग्रन्थेन ॥ (चे. वा श्री. आचार्यः)

कल्हण.

सोमनाथ धार् । साहित्य-अकादमी, नवदेहली । १९७८ । रू. २-५० ॥

साहित्य-अकादमी-परिषदा भारतीयभाषासु प्रसिद्धान् ग्रन्थकृतोऽधि-कृत्य सामान्यतो जनानां यथा बोधः, तत्कृतस्य साहित्यपरिपोषस्य चास्वादो भवेत्, तथा अनतिविस्तृता निबन्धाः प्रकाश्यन्ते । तस्यां मालायाम् आङ्ग्लभाषामयं प्रकृतं पुस्तकं संस्कृते काश्मीरेतिहासवर्णनपरं 'राजतरङ्गिणी' नाम्ना प्रसिद्ध महाकाव्यं तत्कर्तारं कल्हणमहाकविं वर्णयति । अत्र कवेः वंशः, कालः, तस्य कविता, इतिहासप्रतिपादनशैली, इत्यादिकमुपन्यस्तम् ।

इतिहासदृष्ट्या अस्माभिः राजतरङ्गिणीतः के के न्याया बोद्धुं शक्यन्ते,- ये न्यायाः अद्यापि अस्मद्देशचरिते उपयुक्ताः-इत्ययमपि समीचीनो विषयः संग्रहेण विमृष्टः ॥ (वे. रा.)

भारतीयकाव्यसाहित्यम् (Indian Kāvya Literature)- तृतीयो भागः

डा० ए. के. वार्डर् । मोतिलाल् बनारसी दास्, देहली ७. १९९७. रू. ६५-०० ॥

तृतीयेऽस्मिन् भागे प्राचार्यः वार्डर्-महाशयः प्राकृतसंस्कृतकाव्य-नाटकादीना साहित्यांशसमालोचनं स्वोद्दिष्टया दृष्ट्या आङ्ग्लभाषायां विदधाति । तृतीय-चतुर्थ-पञ्चम-षष्ठ-शतकेषु विदिताः कवयः, निबद्धाः ग्रन्थाश्च एतादृशविमर्शदृष्ट्याऽत्र सम्मानिताः । विमर्शकः निबन्धेऽस्मिन् यथा शूद्रक-कालिदास-अमरु-भारवि-सुबन्धु-विशाखदत्तादीन् सुप्रसिद्धान् कवीन् तथैव अप्रसिद्धान्, चन्द्रगोमि-मातृगुप्त-भर्तृमेण्ठादीन् रचयितॄन्, विलुप्तप्रायान्, लोकानन्द-वीणावासवदत्तादीन् ग्रन्थान्, महाराष्ट्रप्राकृतनिबन्धान् सेतुबन्ध-वासुदेवहिण्डयादीन् अपि विस्तृतालोचनेन परिशीलयति इति प्रशंसनीयो विषयः ।

कवितासारस्यवेदिभिरास्वादनीयोऽयं भागः । शिष्टा भागा अपि अनुस्यूततया शीघ्रमेव प्रकाशयिष्यन्त इति विश्वसिमः ॥ (स. सु. जा.)

१९२७-१९५८ कालिदास-प्रवचनानां वाल्मीकि-प्रवचनानां सूच्यौ

संस्कृतसेवासमितिः, मद्रास्-४ । १९७८ ॥

मद्रपुरीसंस्कृतसेवासमित्याः सुवर्णमहोत्सवः गते वर्षे सम्पन्नः । समित्या संस्कृतसाहित्ये यथा जनानामभिरुचिरेधेत, तथा विविधाः कार्यक्रमा आद्रियन्ते, येषु मुख्यानि कालिदासवाल्मीकिव्यासादीनां वार्षिक उत्सवः, तथा भगवद्गीतादीनां प्रमुखानां ग्रन्थानामुत्सवः, तानुत्सवानधिकृत्य विज्ञैः

प्रवचनानि इति । पञ्चाशद्वर्षरूपकालपूगे शतं प्रवचनानि प्रत्येकं कालिदासादीन विषयीकृत्य यानि कृतानि तेषां सूच्यः संपाद्य प्रकाश्यन्ते सुवर्णमहोत्सवाङ्गतया । आसु सूचीषु प्रवक्तृनाम, प्रवचनविषयः, तद्दिनं, प्रवचनं यदि मुद्रितं कुत्र मुद्रितम् इत्यादयोंऽशाः दत्ताः ॥ (वे. रा.)

प्रवचनचिन्तामणिः, प्रवचनपारिजातश्च

सत्यनारायणशर्मा । चौखाम्बा विश्वभारती, वाराणसी । १९७७. प्रत्येकं रू. २५ ॥

संस्कृतवाङ्मये उपनिषदादिग्रन्थान्, कालिदास-शङ्कराचार्यादिग्रन्थकर्तृंश्च विषयीकुर्वन्ति एतानि । विशिष्य जर्मन्-देशायाना सस्कृतविदुषां माक्स्-मुलर्-षोपन्हवर्-हाकर्प्रभृतीनां संस्कृतविमर्श-कार्याणि विचारयन्ति । द्वितीयपुस्तकस्थानि आकाशवाणीद्वारा भाषितानि । सर्वाणि लघुपरिमाणानि, आधुनिकचर्चाविषयकाणि च । कालिदासवर्णितानां मृगपक्षिणामनुशीलनं मनोहरं वर्तते । क्वचिद् 'दण्डिनः तृतीयः प्रबन्ध मृच्छकटिकमेव' इति पुराणाः सिद्धान्ता अनूदिताः अद्यत्वेऽनभ्युपेयास्ते । शब्दशुद्ध्यर्थं प्रवचनानीमानि पुनर्मुद्रणे परिशोधनीयानि ॥ (वे. रा.)

मुरारि-नाम्ना उदाहृताः श्लोकाः (आङ्गलभाषा)

डा० लुड्विक् स्टेर्न्बाक् । अखिलभारतीय-संस्कृतपरिषद्, लखनो । १९७८ । रू. २.

मुरारेः 'अनर्घराघवं' नाम नाटकं प्रसिद्धमेव । तदतिरिक्ततया कविना तेन किमन्यत् काव्यादिकं रचितं वा ? न वा ? प्रायः सुभाषितकोशेषु अलङ्कारशास्त्रग्रन्थेषु उदाहरणार्थं श्लोका उद्धृता दृश्यन्ते । कुतोऽपि ग्रन्थात् स्यु , अथवा मुक्तकाः स्युः । कविः सदा श्लोककार्येव । अनर्घराघवे अदृष्टाः अष्टाविंशतिश्लोकाः कोशेषु दृश्यन्ते । किंतु कोशेषु दत्तानि कविनामानि बहुशो विसंवदन्ति इति सुविदितम् । अतः कोश-

प्रमाणे न कमपि श्लोकं कवि वाऽधिकृत्य निश्चप्रचं किञ्चिद् वक्तुं शक्यते। सर्वमेतं विषयं विचार्य डा० स्टेर्णबाक् विदुषा अस्मिन् लघुनि पुस्तके उपहृतम् ॥ (वे. रा.)

## विद्याधरग्रन्थावली

राजस्थानसाहित्य-अकादमीसंस्थया प्रकाशिता । उदयपुरम् । १९७७ । रू. ८.

राजस्थानीय-संस्कृतपण्डितपारम्पर्यां तिलकायमाना एते बीकानेरस्थाः विद्याधरशास्त्रिणः भाषणे लेखे च विविधे प्रवीणा । आधुनिकान् भावान् प्राचीनसंस्कृतशैलीमनपहाय सरलं सरसं च लिखन्ति । तेषां कविताविलासाना-मेकत्र पठनास्वादनार्थं राजस्थान्-साहित्य-अकादमी-संस्थया यो व्यवसायः स्वीकृतः, स समीचीनोऽभिनन्दनार्हश्च भवति । अस्मिन् सम्पुटे तेषां महाकाव्यद्वयं, खण्डकाव्यानि, सुभाषितानि, नाटकद्वयं चेत्यत्र बहुमुखं साहित्यं विदुषां मोदाय मुद्रितम् । प्रथमत उपहृतं 'हरनामामृतं' नाम महा-काव्यं कर्तुः पितामहं विषयीकरोति; तत्त्वत इदं संस्कृतपाण्डित्यस्यैव चरित्रं भवति । वाराणसी-उज्जयिन्यादिक्षेत्राणां भारतीयसंस्कृतिहृदयभूतत्वं मरुदे-शादीनां सौन्दर्यम् इत्यादिकानां वर्णनं ग्रन्थस्य काव्यशोभामादधाति । 'विश्वमानवीये' काव्ये विश्वदृष्टिः, मानवमहत्त्वं, तन्न्यूनता इत्याद्या भावाः कवेर्मनोभावनां प्रदर्शयन्ति । मनुजं विध्वंसधर्माणं दशमं ग्रहमत्र कविर्वर्णयति । अलंकारादिशास्त्रेषु स्वकीयं मतं सूत्रैर्निबध्नाति । अन्ते मुद्रितयोः नाटकयोश्च बहवो नवीना भावाः आविष्कृताः नूतनमैतिहासिकं वस्तु च स्वीकृतं 'दुर्बलबल' तिबेद्देशोपरि चीनस्याक्रमणं भारतीयराज्यसभायां तस्य समालोचनं नेहरूप्रभृतीनां तत्र भाषणमित्यादिभिर्विषयैः सघटितम् । प्राचीन-नवीन-भावना-समन्वये स्वाभिनिवेशं विशदयति कविरयम्, यथा हरनामामृतो-पक्रम आह—

प्रतिक्षणं यत्र मतिर्नवीना
गतिर्नवीनैव च यत्र नित्यम् ।
कथं न तस्मिन् नवमस्तु काव्यं
युगे युगे नव्यविमर्शशीले ॥

नवं पुराणं न च वेद्मि किञ्चित्
सदा नवं यस्य कृते पुराणम् ।

*　　　*　　　*

गदो महान् नव्यविकासरोधी
साहित्यसंवृद्धिविकासकोऽयम् ।

एष एव भावो विश्वमानवीयपूर्वपीठिकायां च कविना उपन्यस्तः ॥

(वे. रा.)

काश्मीरसंस्कृति-प्रदर्शनानि (Glimpses of Kashmiri culture)

वार्षिकप्रकाशनम्-१, २, ३, (१९७५, १९७६, १९७७), श्रीपरमानन्द विमर्श-संस्था, श्रीनगरम् । रू ३-६०, १०, १२ ॥

कीर्तिशेषः श्रीपरमानन्दः काश्मीरराज्ये पूर्वं गणकाग्रणीस्थानेऽधिकृत आसीत् । तस्य संस्कृतविद्यायां महती श्रद्धा आसीत् । रूपदेवी-संस्कृत-पाठशाला प्रथमं स्थापिता । तद्देहावसानानन्तरं तद्विसृष्टस्य धनस्य साहाय्येन अस्याः काश्मीरसंस्कृतिविषयकलेखसंग्रहरूपायाः सञ्चिकाया. प्रकाशनमारब्धम् । आसु तिसृषु अद्ययावत् प्रकाशं नीतासु काश्मीरस्य विशिष्टं प्रत्यभिज्ञाख्यं शैवदर्शनम्, तदाचार्यभूतमभिनवगुप्तम्, काश्मीरकवीन् क्षेमेन्द्र-सोमदेवादीन् काश्मीरपुराणं 'नीलमतं', तदितिहासं 'राजतरङ्गिणीं' तथा एतादृशानन्यान् काश्मीरकान् विशेषानधिकृत्य विस्तृता उपन्यासा दत्ताः । काश्मीरीं भाषां संस्कृतं चाधिकृत्य तयोः सम्बन्धं निरूपयद् व्याख्यानमेकं यदत्र ३-सञ्चिकायां तदतीव गुणवदुपयोगि च भवति । इयं सञ्चिका अविच्छिन्ना प्रकाशमेष्यतीति विश्वसिमः ॥ (वे. रा.)

आम्बर-जयपुर राजैर्दत्तः साहित्यक-दायः
(Literary Heritage of the Rulers of Amber and Jaipur)

सम्पादकः-गोपालनारायण बहुरा । महाराज सवाइ २-मानसिंह-पुरातन-वस्तु-संग्रहालयः, नगरप्रसादः, जयपुरम् । १९७६. रू. ४० ॥

उद्दिष्टे पुरातनवस्तुसंग्रहालये यो हस्तलिखितग्रन्थसंग्रहो वर्तते, स महान् अनर्घश्च भवति । किन्तु अस्मिन् सञ्चये क· को ग्रन्थोऽस्तीति बहिः संस्कृतज्ञानां बोधो नास्ति, यतस्तस्य सञ्चयस्य सूच्येव नाद्यावधि संदृब्धा । अतः सूचीप्रकाशनार्थं य प्रयत्नः नचिरादुपक्रान्तः अनुस्यूततया प्रवर्तितश्च स साधु श्लाघनीयो विषय । प्रकृते सम्पुटे 'खास्-मोहर्' इति ख्यातस्य हस्तलिखितसञ्चयस्य सूची दत्ता । तस्यां संस्कृतग्रन्थाः भाषाग्रन्थाश्च पृथग् निर्दिष्टाः । बहूनां विशिष्टानां ग्रन्थानां मातृका अत्र दृश्यन्ते । प्रथममाङ्ग्ल-भाषया जयपुरराजान् तदास्थानालङ्कारभूतान् कवीन् पण्डितांश्च, तत्कृतान् प्रबन्धांश्चाधिकृत्य विस्तरेण व्याख्यातम् । काश्चन मातृकाः सचित्राः, ताभ्यः कानिचन चित्रवत्पत्राणि चात्रान्ते प्रकाशितानि । आशास्महे एवमेव अवशिष्टानां जयपुर-मातृकासञ्चयानां च सूच्यः शीघ्रमेव सम्पादनं प्रकाशनं चैष्यन्ति, इति ॥ (वे. रा.)

श्रीमच्छङ्करकिङ्करब्रह्मानन्दकर्मन्दि-नरकण्ठीरवीयम् ।

नरकण्ठीरवशास्त्रिकृतम् । रमणि ब्रदर्स्-मुद्रणालये मुद्रितम् ; १५, सि. पि. रामस्वाम्यार्य स्ट्रीट्, मद्रास् १८ ॥

मद्रास्-नगरस्य नातिदूरे कार्वेटिनगरं नाम स्थलमस्ति, यत्र बोम्मराजा-भिधाना आन्ध्रा भूपाला आसन् । तेषामास्थाने कवयः, शास्त्रज्ञाः, गान-नाट्यकुशलाश्च बभूवुः । तत्र गतशताब्द्यन्ते नरकण्ठीरवनामानः कवयोऽद्वैत-वेदान्तिनो व्यराजन्त । तैस्सरसकविताकुशलैः सुबन्धोर्वासवदत्तायाः 'अभिनववासवदत्ता' इत्यनुवादः, स्तोत्रग्रन्थाश्च रचिताः । अद्वैतवेदान्ते श्रीशङ्करभगवत्पादस्तोत्रं 'यतिसार्वभौमोपहार' इति प्रणीतं, यदस्मिन् समालोच्यमाने सम्पुटे मुद्रितम् । अस्य स्तोत्रस्यान्ते कविः स्ववंशं, वासस्थानं, स्वाश्रयदातारं भूपालं च निर्दिशति । अस्मिन्नेव अद्वैतप्रस्थाने तैः द्वैत-विशिष्ट-अद्वैतमतयोः खण्डनपरः लघुवादग्रन्थोऽपि निर्मित . योऽस्मिन् सम्पुटे प्रधानतया मुद्रितः । अद्वैते परमतस्थैः, विशिष्य वेदान्तदेशिकैर्दर्शिता दोषा अत्र प्रत्याख्याताः । अस्य ग्रन्थस्य मातृकाया आदौ त्रुटयो वर्तन्ते ॥ (वे. रा.)

## कुलशेखरसूरि - सूक्तिसम्पत्

रचयिता-इरङ्गण्टि रङ्गाचार्यः । प्रकाशकः-विशिष्टाद्वैत-प्रचारिणी सभा, ७ नाथमुनि वीथी, त्यागराजनगरम्, मद्रास्-६०००१७ । रू. २-००

दक्षिणदेशेऽतीव प्रसिद्धेषु प्राचीनेषु विष्णुभक्तेषु प्रधानतमोऽयं कुलशेखरसूरिः । 'कुलशेखर-आऴ्वार्' इति प्रसिद्धस्यास्य सूरेः कृतिः द्राविड्यां 'पेरुमाळ्-तिरुमोऴि' इति विश्रुता, यत्रैकशतं पद्यानि । तेषां अर्थपरः संस्कृतानुवादः, आङ्ग्लभाषाविवरणेन सह श्रीमता इरङ्गण्टि-रङ्गाचार्येण कृतोऽद्य विशिष्टाद्वैतप्रचारिणीसभया प्रकाशितः । अत्र तात्पर्यार्थं एवानूदितः । क्वचित् क्वचित् स्वातन्त्र्यमवलम्ब्य अर्थविपर्यासोऽपि समादृतः । प्रसिद्धानि क्षेत्राणि स्वकीयासु गाथासु श्रीकुलशेखरेण निर्दिष्टानि, यथाऽष्टमे दशके 'तिरुक्कण्णपुरम्' इति प्रसिद्धं उत्पलावर्तकक्षेत्रम् । तस्य प्रतिगाथं नाम सूरिणा प्रोक्तम् । अत्रानुवादे एकमपि नाम न श्रूयते । एवं सुबहु वर्तते । तथापि प्रशंसनीयोऽयं प्रयासः ॥ (चे. वा. श्री. आचार्यः)

## श्रीनिवासशतकम्

रचयिता विट्टलदेवुनि सुन्दरशर्मा । प्राप्तिस्थानं श्रीमती वि. नागरत्नाम्बा, २-१-४२८, नल्लागुण्टा, हैदराबाद् ५०००४४, १९७८. रू. २-०० ॥

श्रीमद्वेङ्कटाद्रिकृताधिवासं भगवन्तं श्रीनिवासम् अधिकृत्य भक्तिप्रवण-तया वि. सुन्दरशर्मणा वसन्ततिलकावृत्ते सन्दब्धमिदं अष्टोत्तरशतपद्यात्मकं श्रीनिवासशतकं नाम स्तोत्रम् । "हे श्रीनिवास परिपालय मा विमूढम्" इति मकुटेन समलङ्कृतमिदं शतकं मनोज्ञया भावसम्पदा निरर्गलया धारया च परिपुष्टम् ॥ (स. सु. जा)

OUR CONTRIBUTORS

अस्मिन् सम्पुटे दृश्यमाना नूतना लेखका —

Sri Arahardikar
S. N. D. T. College
Bombay

अरहर्डीकरः
एस्. एन्. डी. टी. कालेज्
मुम्बई

Dr K. Raghavan Pillai
Prof of Sanskrit
University of Kerala
Trivandrum

डा० के. राघवन् पिळ्ळै,
प्राचार्यः,
केरलविश्वविद्यालयः,
तिरु-अनन्तपुरम्

KALHANA'S

# Rajatarangini

(The Saga of the Kings of Kashmir)

Translated by R S Pandit

Kalhana's *Rajatarangini* is not only a classic of Sanskrit narrative poetry but is the earliest extant history of Kashmir Written in the middle of the 12th Century, Kalhana's masterpiece is a unique blend of authentic chronicle and imaginative poetry inspired by the poet's love of his exquisitely beautiful homeland, Kashmir

This famous English translation by R S Pandit was first published in 1935 It was out of print for many years until Sahitya Akademi published a reprint in 1968 A second impression of this reprint has been published with a slip-case.

Royal Octavo, pp. xli 783 Rs. 100



SAHITYA AKADEMI

New Delhi 110001 : Calcutta 700029

Madras 600018 : Bombay 400014